कविकुलगुरु कालिदास संस्कृत विश्वविद्यालय, रामटेक

हस्तलिखित संग्रह

दाखल क्र M613 विषय ज्योतिष्य.

नाव. ताजिक नीलकंठ. [illegible]

लेखक/लिपीकार नीलकंठ दैवज्ञ.

पृष्ठ 290 काळ श.स. 1877. पूर्ण/अपूर्ण

यह पुस्तक टीका सहित तीनों तंत्र बहुत शुद्ध करके

# ताजिक नीलकण्ठ

मतबअ हिन्दू प्रेस देहली में लाला प्यारेलाल के एहतमाम
से छापा गया संबत् १९३४

॥श्रीगणेशायनमः॥ यत्पादपद्मं सुरसिद्धदैत्या अभीष्टसिद्ध्यै प्रणमंति नित्यं तं विघ्नराजं मनसा स्मरामि भक्ति-
प्रियं नागमुखं गणेशं १ गोदावरीतटे भाति गोलग्रामोतिसुंदरः तत्रावसत्सर्वे जामे सिद्धांतं त्रिभुजभानवः २ अ-
कविद्याकुशलैर्हि जनैद्रैः संसेवितो भूमितले प्रसिद्धः दिवाकरो दैवविदां वरिष्ठो वेदांतशास्त्राभिर्वभूव ३ तस्या-
त्मजाः पंचगुणैरुपेताः जाताः अमीषां प्रथमस्तु कस्मः दैवज्ञवर्यः सकलागमज्ञो विश्वेशपादांबुज रतो नितांतं
४ तस्यानुजौ ख्यातशिरोमणी तौ योद्धिमुमल्लार्यभिधो पृथिव्यां त्रिस्कंधपारंगमरंगमल्लौ श्रीकेशवप्याग्रज-
नौ प्रसिद्धौ ५ तस्यानुजो गणितविज्ञगणानाग्रगण्यो मल्लारिसेवनसमुद्भवशास्त्रपण्यः स्वच्छास्त्रवुद्धिसुहृदां च नम

श्रीगणेशायनमः स्वस्वाभिलाषं नहि लुब्धुमीशा निर्विघ्नमीशानमुखासुरो-
घाः विनाप्रसादं किल यस्य नौमि तं ढुंढिराजं मतिलाभहेतुम् १

हाररणयः श्रीविश्वनाथगणकः सुनिरां चकास्ति ६ आसीन्नाम्ना नीलकंठो द्विजाग्र्यो ज्योतिःसिंधोः यार
दृग्भाष्यवेता तेनोद्दिष्टे वर्षतंत्रे करोमि टीकां सम्यग्विश्वनाथो विविच्य ७ तंत्रे ग्रंथारंभे प्रारिप्सित निर्विघ्नस-
मात्यर्थं कृतं मंगलं शिष्यार्थे निर्विघ्नाति स्वस्वेति अहं नीलकण्ठस्तं ढुंढिराजं नौमि नमस्करोमि कथंभूतं म-
तिलाभहेतुं मतिर्बुद्धिस्तस्या लाभः प्राप्तिस्तत्र हेतुं कारणं तं कं यस्य ढुंढिराजस्य [illegible]
मुखाः सुरौघाः ईशानो महादेवस्तदादयः [illegible]
मनोरथ [illegible]

तत्र प्रथमं संप्रयोजनं तदारंभं प्रति जानीति जातकेति ततस्मात्कारणा: अब्द फल वर्षीय शुभाशुभंफ लं आदि ताजिकात् प्रथम ताजिक ग्रंथात् जात्यभिप्राये एकवचनं पूर्व ताजिक ग्रंथेभ्य इत्यर्थः ब्रुवे वदामि तस्मात्कस्मात् यतो यतो यस्मात्कारणात् जातक शास्त्रोक्त दशा शुभाशुभ फलं नृणां मनुष्याणां स्थूल काल फलदं स्थूल कालेन वर्षाधिक काले नोत्सर्गत: फलं ददाति

जातकोदित दशा फलं यत्स्थूलकाल फलदं स्फुटं नृणांतत्र
नस्फुरति दैव विन्मति स्तछ्वेब्द फलमादि ताजकात् २ गता:
समा: पादयुता: प्रकृतिघ्न समागणात् खवेदाप्त घटीयुक्ता
ज्जन्म वारादि संयुता: ३ अब्द प्रवेपो वारादि सप्ततष्टेव-
निर्दिशेत् शिवघ्नोब्द: खखाद्रीदुलवाढ्य: खाग्निशेयिन:४

इति स्फुटं ॥ यतस्तत्र ग्रहाणामायुर्दात्मका दशा: वर्ष समूहात्मका गणिते नागछंति तंत्र तस्मिन् फले दैव वित्मति: दैवज्ञानां बुद्धि: नस्फुरति कस्मिन्समये किं फलं भवति सूक्ष्म विचारे बुद्धि: स्फुटा न भवति अतो वर्ष मध्ये फल ज्ञानार्थं मिदं वदामीत्यर्थ: २ गता: समा इत्यादि पंच श्लोका: संज्ञातंत्र टीकायां व्याख्याता:

तिरहितः नृपः क्षत्रियवर्णः समः समांगः अजोमेषः एवंगुणविशिष्टोज्ञेयः अयंराशिद्विवर्णः अरिक्तवर्णः
पतिवर्णश्च मेषसिंहधन्विनामेव वर्णद्वयमुक्तं कुतः समरसिंहोक्तत्वात् २ वृषः स्थिरास्थिरसंज्ञकः स्त्री
स्त्रीराशिः क्षितिर्भूमिराशिः शीतः शीतलस्वभावः रूक्षः कांतिरहितः याम्येट् दक्षिणदिक्स्वामीसुभुः
सुष्ठुभूमिचारीवायुः वायुप्रकृतिः निशाराज्ञिबलीचतुष्पाच्चतुश्चरणः श्वेतः शुभ्रवर्णः अतिशब्दो
महाशब्दः विषमोदयः मध्यमप्रजासंगः मध्यमप्रजः मध्यमस्त्रीसंगश्चशुभः सौम्यः वैश्यः वैश्यवर्णः
अयंश्लेषांगः मेषसिंहधन्विनामेवहृष्टांगत्वमुक्तं अर्थात् इतरेश्लेषांगावोध्या: ३ द्वंद्वंमिथुनराशिरेताहृ

अथवृषराशिस्वरूपमाहवृषः स्थिरः स्त्रीक्षितिशीतरुक्षोयाम्येट्सुभूर्वायुनिशा
चतुष्पात् श्वेतोतिशब्दोविषमोदयश्चमध्यप्रजासंगशुभोपिवैश्यः ३ मिथुनमा
हप्रत्यक्समीरः शुकभाद्विपन्नाद्वंद्विमूर्तिर्विषमोदयोष्णः मध्यप्रजासंगवनस्थ
शुद्रीषंस्वनस्निग्धदिनेट्तथोग्रः ४॥

गोज्ञेयः पश्चापश्चिमप्रत्यक्दिक्स्वामीसमीरोवायुराशिः शुकभाः शुकंकांतिः हरितवर्णइत्यर्थः द्विपात्
द्विचरणः नपुरुषराशिः द्विमूर्तिः द्विस्वभावः चरस्थिरस्वभावात्मकइत्यर्थः तत्राप्यर्द्धस्थिरमुत्तरार्द्धंचरमि
तिविशेषोज्ञेयः उक्तंचभट्टोत्पलेनचरराशेर्विपरीतंमिश्रंवाच्यंद्विमूर्त्युदयेस्थिरवत्प्रथमेर्द्धस्यादपरेचर
राशिवत्सर्वमितिविषमोदयः उष्णःउष्णस्वभावः मध्यमप्रजासंगः मध्यमस्त्रीसंगश्चवनस्थोवनचारीशू
द्रः शूद्रवर्णः दीर्घस्वनः महाशब्दः स्निग्धः चिक्कणः दिनेट्दिवाबलीतथाशब्दः पादपूरणेउग्रः क्रूरः अयंश्लेषांगः ४॥ ४

कुलीरः कर्कराशिः एताद्दशोज्ञेयः यथा वहुप्रजासंगपदः वहुप्रजो वहुस्त्रीसंगो वहुचरणश्च चरश्चरसंज्ञकः अंगनास्त्रीराशिः पाटलः स्वेतरक्तवर्णः हीनशब्दो निःशब्दः शुभः सौम्यः कफीकफप्रकृतिः स्निग्धचिक्कणः जलंजलराशिः अंवुचारी जलचरः समोदयी विप्रो ब्राह्मणवर्णः निशारात्रिवली उत्तरेशः उत्तरदिकस्वामी अयं स्मर्थांगः ५ हरिः सिंहः एताद्दशोज्ञेयः पुमान् पुरुषः स्थिरः स्थिरसंज्ञकः उग्रः उग्र

अथ कर्कराशिस्वरूपमाह वहुप्रजासंगपदः कुलीरश्चरोंगना पाटलहीनशब्दः शुभः कफीस्निग्धजलांवुचारीसमोदयी विप्रनिशोत्तरेशः ५ अथ सिंहराशिस्वरूपमाह पुमान् स्थिरोग्नि र्दिनपीतरूक्षोपितोष्णः पूर्वेशः हरश्चतुष्पात् समोदयो दीर्घखोल्पसंगप्रजोहरिः शैलन्रपोग्रधूम्रः ६

राशिः दिनं दिवा वली पात ; पीत वर्णः ; रुक्षः ; कांति रहितः ; पित ; पित प्रकृति ; उष्ण स्वभावः ; पूर्वेशः ; पूर्व दिक स्वामी हरः ; हरांग ; चतुष्पात् चतुषुचरणः ; समोदय ; दीर्घ खोमहा शब्दः ; अल्प संगप्रजः ; अल्प स्त्री संगो अल्प प्रजश्च शैलः ; पर्वतचारी न्रपः ; क्षत्रिय वर्णः ; उग्रहः ; क्रूरः ; धूम्रः ; धूम्रवर्णः अयं राशिर्द्विवर्णः पीतो धूम्रश्च ॥ ६ ॥

ता. टी. ६५

भावनायां विशेषं चाह बलेति पंचाधिकारि ग्रहान्यतमयोर्वल हष्यो समतायां अन्हि दिवसे वर्षप्र वेसे सति सूर्याक्रांति राशि स्वामी अंति माधिकारी ग्रहो वर्षस्य स्वामी निशि रात्रौ वर्ष प्रवेशे सति इन्दु राशीट्चंद्रा क्रांति राशि स्वामी अतिमाधिकारी ग्रहो वर्षस्य स्वामी भवति इति एवं केचिदा चार्या: आ हु: पूर्वोक्त प्रकारावगतो वर्ष स्वामी चंद्रोयेन ग्रहेण सन्नान्य तरेण इत्यथाल: मुथशिल कारीग्रहोव र्ष अनेन ग्रह मुथशिल कारी चेतसानक्ग्रहाणां मध्ये योवलाधिक: चल साम्ये मुथहेश्वर इति युग्धया

येनेत्यथालोव्द विभु: शशीसवर्षाधिपश्चंद्रेभयोन्यथात्वे १२

अव्दाधिपोव्ययषडष्टभभिन्नसंस्थोलव्धोदयोव्दंजनुषो: स

हष्योवलेननि: शेषमुत्तमफलंविदधाति कायेनेरुज्यराज्य

वललब्धिरतीवसौख्यं १३

ज्यं चंद्रस्य मुथशिलाभावे निर्णीय [illegible] ने ५द्रस्य मुथशिलाभावे सति चंद्राक्रांति राशि स्वामी वर्षेश्वरो भवति अनेन प्रकारेण ककस्थे चंद्रमसि चंद्र एव वर्षेश्वरो नान्य इति त्वेयं अथव र्षेश्वरस्थिति वशेन फल माह अव्दाधिप इति अव्दाधिपो वर्ष स्वामी ग्रह: व्यय षडष्टमभिन्नस्थ: द्वाद शषष्टाष्टमस्थानव्यतिरिक्तस्थान स्थित: यद्यपि लग्न दर्शी त्वेन वर्ष स्वामुयुक्तो वर्षस्वामी षष्टाष्टमद्वा दशास्थानेष्वनवस्थित एवेति वक्तु मनुचितं तदति रिक्त स्थानस्य इति तथापियंचापिवन्नोतनु मित्तमा ण इत्यादि प्रकारेण षष्टाष्टम द्वादशास्थान स्थितस्या

६

नी
टी.
८

विवर्षेश्वरत्वं संबंधः राशिकुंडल्यां दृष्टिसद्भावेन तत्र लग्न दृष्टृ वर्षेश्वरस्य भावकुंडल्यां तत्स्थान
स्थितत्वं संभावनायाः ब्रह्मणोप्य निर्वार्यत्वाच्च लब्धोस्यः वर्षप्रवेशकाले प्राप्नोस्योस्तंगत इत्यर्थः
भवजनयोः वर्षजन्मकालयोः वलेन पंचवर्षी वलेन सदृशस्तुल्यः अहीनवल इत्यर्थः एतादृशो
वर्षेश्वरः निःशेषं समग्रं उत्तम फलं करोति तदेवाह कायेत्यादि स्पष्टं १२ अथ वर्षेश्व फलं पंचवर्गीफ
लानुरोधाद्भवतीत्याह वलेति वर्षस्वामिनि वलेन पंचवर्गेविलेपूर्वेण सति शुभफलं पूर्णं भवति मध्यव

वलपूर्णेब्दये पूर्णशुभंमध्येच मध्यमं अधमेदुःखशोकारि
भयानिविविधाः शुच: १४ सूर्येब्देयेवलिनिराज्यसुखात्मजा
र्थलाभः कुलोचितविभुः परिवारसौख्यंपुष्टंयशोगृहसुखंवि
विधाप्रतिष्ठाशत्रुर्विनश्यति फलंजनखेटयुक्त्या ॥ १५ ॥

लेन शुभंमध्यं भवति अधमे हीनवले दुःखरोगादित्यादि स्पष्टं अथ वर्षेश्वरस्य सूर्य वल पूर्णतायां
फलमाह सूर्ये इत्य इति विनश्यतित्यंतेष्टंष्टं फलमिति इत्युक्तं फलं जनिखेट युक्त्या जन्मकाले ग्रह
विचारेण वाच्यं एतदुक्तं भवति वर्षेश्वरग्रहो जन्मकाल उत्तमवलश्चेत अत्राप्युत्तम वलस्तदोत्त
मोत्तमंमध्यच लश्चेदुत्तमं अधमवलश्चेन्मध्यमंजन्मकाले मध्यम वलश्चेत्तु क्रमेण णोनमामध्यमा
ध्यमंभवति जन्मकालहीनवलश्चेतु क्रमेणमध्यमाधमंभवंति १४

उत्तरार्द्धे चतुष्पदीत्वज्ञेयं मृगस्य मकरस्यांतभागे उत्तरार्द्धे जलचरत्वंज्ञेयं १५ पितानिलाविति मेषः पितं वृषोवायुः १ निलोमिथुनः धातुसमः वातपित्तकफात्मकः कर्कः कपि तथासिंहः पितंकन्या १ निलःतुलाः धातुसमो वृश्चिकः कफी एवं धनुः पितंमकरो विलोकुंभो धातुसमः मीनः कफीतिमेयतः मेषमारभ्य मीन पर्यंतं चतुष्कचतुष्क क्रत्या त्रिस्त्रिरावृत्तंभवति एते राशियः सूरिभिः पंडितैः रूहांनीया ज्ञानव्याः अथ राजन्यविट्शूद्र धरासुराणां द्वादश राशिषु निरावृत्तिरोया तद्यथा मेषो राजन्यः क्षत्रियवर्णः

अथोक्तराशिस्वरूपस्य फलकथनार्थं संक्षेपेण किंचित्स्वरूप
मोहपितानिलौधातुसमः कफश्च त्रिसेषतः सूरिभिः रूहनी
या राजन्यविट्शूद्रधरासुराश्च सर्वंफलंराश्यनुसारतः स्यात् ॥१६॥

वृषः विट् वैश्यवर्णः मिथुनः शूद्रवर्णः कर्कोधरासुरोब्राह्मणवर्णः तथा सिंहः क्षत्रियवर्णः कन्यावैश्यवर्णः तुलाशूद्रवः वृश्चिकोब्राह्मणवर्णः एवंधनुक्षमकरोवै· कुंभो शू· मीनो ब्राह्मणवर्णः एतेषां फलंराश्यनुसारतःराशिसदृशंफलंस्यादिति। अथ गणितं वक्ष्यति तत्रादो ग्रहाणां चालनं वक्ष्यति तत्र्चालनेवर्षप्रवृत्तिरपेक्षितासाच ग्रंथकर्तात्रनोक्ताः कुतः वर्षतंत्रेउक्तात्वात् ननुवत्रसगभिरत्रोपयुक्तत्वात् प्रदर्श्यते अन्यच्चवर्षेशनिर्णयरुणां दृशा मासदिनप्रवेशादिकंअत्रोपयुक्तंतत्तुवर्षतंत्रे प्रदर्शितं नात्रअत्रतुः अस्माभिः वस्यपत्र उपयोगःतत्रतत् १०

ता· टी· १० ·

प्रदर्श्यते मता: समा: गतवर्षाणि तद्यथा जन्मकालस्य शाकोवर्तमान शाकात् शोध्य: शेषगतसमा: पादयु
ता: खचतुर्थांशेन्युत: कार्या: प्रकृति एकविंशति स्वब्द: तेन गुणा तोय: समागणोवर्षगण: तस्मात् खवे
दा: ४० प्तघटीयुक्ता चित्वारिंशताभक्तात् घट्यादिपलिअंतेन चतुर्थांसशमायुता: कार्या: तत: जन्मवारा
दिजन्मकालिकवार इष्टघटीपले ऽसंयुक्ता: कार्या: तदनंतरं उर्ध्वांक सप्ततष्टे सप्तमिर्भक्ते यच्छेशंत
त् अत्र अस्मिन् ग्रंथे अब्दप्रवेशे वारादि वारघटीपलात्मकं निर्दिशेत् वदेत् अत्र वर्तमानोवारोज्ञेय: १६

अथवर्षफलसाधनार्थंवर्षप्रवृत्तिसमयमाह। गता: समा: पादयुता: प्रकृतिघ्नस
मागणात् खवेदा ४० प्तघटीयुक्ता: जन्मवारादिसंयुता: अब्दप्रवेशेवारादिसप्तत
ष्टेन्ननिर्दिशेत् १६ अथतिथिसाधनमाह। शिवोघ्नोब्द: स्वरबाद्रीदुलवास्य: खाग्नि
शेत: जन्मतिथ्यन्वितस्तत्रतिथावब्दप्रवेशनम् १७

अब्दंगतवर्षगण: शिवघ्न: एकादशभिर्गुण्य: स्वरवाद्रीदुलवाद्य: स्वकीयोय: सप्तत्याधिकशतभा
गस्तेनाढ्य: युक्त: कार्य: जन्मतिथ्यन्वित: शुक्लप्रतिपदमारभ्य जन्मकालीन वर्तमानतिथिभिरन्वि
तायुक्ता: कार्य: खाग्निशेषंतत्रिंशताभक्त: तत्रतिथौतस्मिन् शेषे पितिसो ऽब्दप्रवेशनं वर्षप्रवेशोभ
वति अस्यां तिथौ वर्षप्रवेशोभवति तीनियमो नास्ति कस्यचित् पूर्वतिथौ अग्रिमतिथौच भवति अथ
वारस्येच प्रमाणं तिथित्रयस्यमध्ये यस्मिन्तिथौ पूर्वानीत वारोभवति सएववर्षप्रवेशोतिथि ज्ञातव्या यत्र ११

२४।३५ मंद फलं धनं ०।४२।२३ संस्कृतो ऽर्कः ८।७।३७।४८ अयनांशाः १७।४९ चरखंडानि ७५।६०।२१
चरंधनं १३८ संस्कृतोजातोजन्मसमये स्पष्टोऽर्कः ८।७।३०।६ अथ वर्ष प्रवेश समये सिद्धांत रस्याहर्गे
णः ३५।९५ चक्रं ९ सूर्योदयेमध्येमोर्कः ८।६।३२।५८ देशांतर्विकालाभिर्युतः ८।६।३३।२० इष्टघटीभिः
१२।१९।३० चालितःजातं तात्कालकोऽर्कः ८।६।४५।२७ मंदकेंद्र ५।११।१४।३३ मंद फलं धनं ०।४२।२३ सं
स्कृतोर्कः ८।७।२७।५० अयनांशाः १८।२६ चरखंडानि ७५।६०।२५ चरंधनं १३६ संस्कृतां जातो वर्षप्रवेशस
मये स्पष्टोर्कः ८।७।३०।६ अयं वर्ष कालीन सूर्यः पूर्वानीतजन्म कालीन सूर्येण सह तुल्योजात इति एतेन
गणेश दैवज्ञमतं निरस्तं अनेनरीत्याद्योस्तुल्यताभवतीति गणेशदैवज्ञैर्नविलोकित मिति ज्ञायेतेतैस्क
वर्ष प्रवेशे स्पष्ट घटीभिः पंचांग स्थित सूर्यस्य चालनं दत्वाजन्म कालीन सूर्येण सह कलासु तुल्यताभव
तीति नायातिती हष्ट्वा वर्षप्रवेश घटीषु अन्यः संस्कारोप्युक्त इति तदुच्यते तत्रापि हेतु चुरुते इदमे
वांतरं पतितीस सेयोरंतरं पतिती एक पक्ष मंगी कृत्य उभयो साधनं चेत क्रियते तदा अत पतितिरनुसै
र पक्षाज्जनम् कालीन सूर्यः सीधितः सौर पक्षात्यंचागस्य सूर्योपि वर्तते तत्राप्यंतरं पतति इतिचे
दुच्यते हेतुः येन यस्य कस्यापि जन्म समये ग्रह साधनं क्रियतेन यस्य कस्मिन् ग्रामे जन्म तत् ग्रा
मस्य चर देशांतरं संस्कारः क्रियते येन यत ग्रामस्य पंचांग क्रियते तेन तत् ग्रामस्यच देशांतरसंस्का
रो ग्रहेषु क्रियते ग्रामे ग्रामे चर देशांतरे भिन्न भिन्न इति इति कारणांदंतरं पतितिउभयोरेकेदेशस्थसं

ता॰
नी॰
२५
१७

स्कारश्चेत् क्रियते तदंतरं सर्वथान पतति यस्मात् ग्रंथात् साधितः सूर्योजन्मकालीनो यावद्भिः संस्का
रैः संस्कृतो भवति तावद्भिः संस्कारैः संस्कृत तस्मात् ग्रंथाद्वर्षप्रवेश समये साधितः सूर्यः धिककलात्यक
स्तुल्योभवति निश्चितं अत्रार्थे पूर्वमेवोदाहरणं प्रदर्शितं अन्या रीत्याद्वयोस्तुल्यताभवति इति ज्ञात्वादै
वज्ञ चक्रचूडा मणिभिः श्रीकेशव दैवज्ञैरप्याचार्यैर्नान्यः संस्कारो वर्ष प्रवेश समयेप्युक्तः गणेशदैव
ज्ञैर्यदुक्तं तस्सत् अथप्रवेश समये स्पष्टाग्रहाः साध्याः तत्रापिसुखार्थं पंचांग स्थितग्रहेषु चालनमाह। ग

अथवर्षप्रवेशसमये स्पष्टाग्रहाः साध्याः तत्रापिसुखार्थं पंचांगस्थि
तग्रहेषुचालनमाह॥ गतैष्यदिवसाद्येनगतिर्निघ्नखषट् ६ हतालब्ध
मंशादिकं शोध्यंयोज्यंस्पष्टोभवद्ग्रह १८

तैष्यदिवसैः कृत्वा ग्रहस्य कलादिकागतिर्गुणयात्खषड्भिः वस्याभाज्यालब्ध मंशादिकं अंश कलाविक
लात्मकं पंचांगस्थितग्रहेशोधयंयोज्यं वा यदा गत मतरं तदा शोध्य यदा त्वेष्य मंतरस्यात्तदायोज्यं
सतात्कालिका स्पष्टो ग्रहो भवेत वक्रगति ग्रहस्य राहु केत्वोश्च चालनमार्ग ग्रहा पेक्षाया विप
रीत ज्ञेयं उदाहरणं वर्ष प्रवेश वारादिक मध्ये २।१२।१८ अवधिस्य वाराविना ६।१३
५६ शोधिते जाताश्चालनाकः २।५८।२२ अपनेन सर्वे ग्रहाश्चालितः ॥ १८ ॥ १८ ॥ २५

यदा भक्तकालः साध्यते तदा गुणितो स्यात् एष्टोस्याः शोध्याः यदा भोग्यकालः साध्यते तदा गुणितोदया
शोध्याः शोधिते यच्छेषं तत् वाऽऽग्न्या ३० हतं असुद्धेनयच्छोधितोन शुध्यति सः अशुद्धोदयः तेन भक्तं फलं अ
शादिकं ग्राह्यं तत् अशुद्धभे हीनं कार्यं शुद्धभेयुक्तं कार्यं तद्यथा ऋणलग्नसाधने धनलग्नसाधने च मेषाद्य
एनयायद्राशि॰ संख्याकोऽशुद्धोदयो भवति तद्राशिसंख्यामध्ये लवादिकं हीनं योज्यं तदूनं तरं व्ययनांशकं

इष्टनाडीपलेभ्याश्चगतगम्यान्निजोस्यात् शेखंखघ्न्या ३० हतं भक्तमशुद्धेन लवादिकं २२
अशुद्धभे हीनंयुक्तानुर्व्ययनांशकं एवं लकोदयैयुक्तं भोग्यं शोध्यपत्नीकृतात् २३ पूर्वपश्चा
न्नताद्न्यत्प्राग्वत्तद्धासं भवेत् सषड्जे लग्नघेजायातुर्योलग्नोः नतुर्यतः २४ अग्नेत्रयः ष
डेवंते भार्द्धयुक्ताः परेपि षट्परेपि षट्खखेभावसंपूर्णं फलसंधिसमेतु खं २५ षष्टोशायु
क्तनुः साधिरग्रेषष्टांशयोजनात् त्रयः ससंधयो भावाः षष्टांशोनेकयुक्सुखात् ॥ २६ ॥

अयनांशकैः रहितं कार्यं ततु लग्नं स्यात् एवमनयारीत्यालंकोदयैः कृत्वा खेभैर्भक्तं भोग्यं साध्यं तत्पलीकृतात् पूर्वपश्चि
मनताच्छोध्यं अन्यत्स्वपिशिष्टं यत्कर्मतत्प्राग्वत् पूर्वरीत्या साध्यम् ततः स्वभं भवेत् तद्यथा यदा पूर्वं नतं भवति
तदा पूर्वनत मिष्टकाले कल्प्यलंकोदयैः कृत्वा खेभक्तं शोध्यं अन्या क्रिया ऋणलग्नवत् यदा पश्चिमनतं
भवति तदा पश्चिमनत मिष्टकालं प्रकल्प्य लंकोदयैः कृत्वा खेभोग्यं शोध्य अन्या क्रिया धनलग्नव-

त्कार्यो तद्दशसंभवेत् अथ लग्नदशमभावावुक्तावन्यभावसाधनमाह। सषड्भे इति लग्न राशिषड्युतेन जा
यासप्तमभावोभवति एवं सषड्भं तुर्यश्चतुर्थभावोभवति एवं भावचतुष्टयं जातं अथ लग्नो तनुर्यतः लग्नं
चतुर्थभावात् शोध्यं शेषस्य षष्ठांशो राश्यादिस्तेनयुक्तं तनुर्लग्न कार्यं सलग्नद्वितीयभावयोः संधिः स्या
त् लग्नस्य विरामसंधिः स्यात् धनभावस्यारंभसंधिरिति सर्वत्र ज्ञेयं अग्रे षष्ठांशयोजनद्वितीस एवागतः सं
धिः तेन षष्ठांशयुक्तः तृतीयभावः स्यात् द्वितीयभावः षष्ठांशयुक्तः द्वितीयतृतीयभावयोः संधिः स्यादयं
षष्ठांशयुक्तः तृतीयभावः स्यात् अयं षष्ठांशयुक्तः। तृतीयचतुर्थभावयोः संधिः स्यात् एवं त्रयः संधयोः

भुक्तं भोग्यं खेष्टकालान्नभुध्योर्त्रिंश ३० न्निघ्नोत्स्वाद्याप्तलवाद्यंहीनं
युक्तं भास्करे नतनुः स्याद्बलाद्वौ लग्नं भार्धयुक्तात् द्वेस्तु २७

भावाः जाताः तदनंतरं अग्रेत्रयः ससंधयोभावाः साध्याः तद्यथा पूर्वानीतषष्ठांशरूपमध्येसंशोध्य अने
न राश्यादिना सुखभावो युक्तश्चतुर्थपंचमभावयोः संधिः स्यात् अयमेव संधिः पुनस्तेन युक्तः पंचमभावः
स्यात् अनेन युक्तः पंचमषष्ठभावयोः संधिः स्यात् अयं तेन युक्तः षष्ठभावोभवति अयं तेन युक्तः षष्ठ
सप्तमभावयोः संधिः स्यात् एवं षट् संधयोभावाः जाताः एते भार्द्धयुक्ताः भार्द्धभङ्गाशपतैर्युक्ताः सं
तः अवशिष्ट षट् भावान् ससंधयः स्युः एवं भावसंधिनिष्पत्तिप्रयोजनमाह खेटे इति यो ग्रहो यद्भाव
स्थोभवति स्वेष्टभावस्य राश्यंशकला विकलाभिस्तुल्य

स्यात् तदा सग्रहः तत्राव स्यैष्य भमस्य भुंक्ता वा फलं पूर्णा विंशति विश्वात्मकं ददाति संधितुल्ये ग्रहे भ्रूत्येफ लं भवति २६ अथ सूर्यस्य भुक्तमथवा भोग्यमुक्तरीत्या चानीनीतं तद्यदीष्टकालघटीपलेभ्यो नम्युद्घोत त् दाके नोपायेन साधनं कर्त्तव्यमित्यत आह भुक्तमिठि भक्तं भोग्यं यदेष्टकालनाडीपलेभ्यो नव्द्योत तदा इष्टनाडीपलानि त्रिंशत् गुणितानि कार्याणि सायनसूर्यस्य राश्युदयेन भाज्यानि एवं लवाद्यं ग्र हं हीनं युक्तं भास्करे कार्यं तद्यथा यदा रवेर्भुक्तमानीतं भवति तदा लवाद्यं फलं सूर्यमध्ये पहीनं कार्यं यदा भोग्यमानीतं भवति तदा लवाद्यं फलं सूर्यस्य मध्ये युक्तं कार्यं तत तनुः लग्नं स्यात् रात्रौ लग्नसाध नं चेत क्रियते तदा राशिषट्कयुक्ताद्रवेः सकाशाल्लग्नं साध्यं रात्रौ दशमलग्नसाधनेपि राशिषट्कयुक्ताद्र वेः सकाशात् भुक्तभोग्यं साध्यं अत्रोदाहरणं अस्य जन्म श्रमावुदयात् तात् कलिकोर्कः ९।७।३०।६ अयनां शाः १८।२६ युक्तः ९।२५।५६।६ अस्य भोग्यांशाः ४।३।५४ मकरराशेरुदयो २९८ गुणितः १२ ११।२२।१२ अयं त्रिंशत ३० भक्त्या जातो भोग्यकालः ४०।२२।२२।४४ अयमिष्टनाडी १२।१९ ३० पलेभ्यः २२८।३० शोधितः शेषं १८९।७।२६ मकरादग्रे कुंभोदयः २३९ शेषाच्छोधिते शे षं ४५८।३७।२६ कुंभादग्रे मीनोदयः २०३ शेषाच्छोधिते शेषं २५५।३७।२६ मीनादग्रे मेषो दय २०३ शेषाच्छोधिते शेषं ५२।३७।२६ मेषादग्रे वृषभोदयः २३९ अयं शेषात् ५२। ३७।२६ न शुद्धति अतः शेषः ५२।३७।२६ खव्या ३० हतं १५।७८।३० अशुद्धोदयेन २३९ भक्तं लदा त्रिंशादिकं ६।३६।१८ इदमशुद्धात्पूर्व मेषात् गणनया एकोराशिस्तेन युक्तं

| [illegible] | | | |
|---|---|---|---|
| | मे | २०३ | मी |
| | वृ | २३५ | कुं |
| | मि | २९८ | म |
| | के | ३४० | ध |
| | सिं | ३५९ | वृ |
| | कं | ३५२ | तु |

।२।३६।२६ इदंअयनांशैः १८।३६ हीनंजातंलग्नं ०।२८।१०।२६ राशिषट्कयुतंजातंजायाभवनं ६।१८।१०।२६
अथ दशमलग्नस्योदाहरणं तत्रलंकोदयाः दिनार्द्धं १२।४४ दिनगत घटीभिः १२।१८।३० हीनंजातंपूर्वंन
तं ०।२५।३० अयमिष्टकालः लंकोदयैः कृत्वासायनांशसूर्यस्यभक्तभागागुणनीयाः उपरितनाकः त्रिंशाद्ध
तः लब्धंभक्तकालः २७।८।२४।० अयंघटीपलेभ्यः २५।३० नशुध्यति अतः शेषः २५।३० त्रिंशतगुणितं।
७६५ स्वोदयेन ३२३ भक्तंफलंलवादिकं २।२२।६ इदंराश्यादिसूर्यमध्येर्द।७।३०।६ हीनंजातं ८।५।८।०
इदंराशिषट्कुयुतंजातं सुखभवनं ३।५।८।० लग्नहीनचतुर्थभावस्यशेषं २।१६।५७।
४४ इदंषट्भक्तंलब्धंराश्यादि ०।१२।४८।३७ अनेनयुक्तंलग्नंजातोलग्नस्यविराम
सिंधिः ११०।५८।५३ अयं षष्टांशेनयुतोजातोद्वितीयभावः १।२३।४८।३० अयंषष्टांशे
नयुतेजातेद्वितीयभावस्यसंधिः १।२६।३८।७ अयंषष्टांशेनयतोजातोस्तृतीयभा
वः २।८।२६।३८ अयंषष्टांशेनयुतोजातस्तृतीयभावस्यसंधिः २।२२।२७।१८ आगानी
तषष्टांशः ०।०१२।४८।३७ अयंरूपाच्छोधितः शेषं ०।२७।१०।१३ अनेनसुखभावोयु
क्तः जातः सुखभावस्यसंधिः २।२२।१८।२३ अयंतेनयुक्तः जातः पंचमभावः ४
अयंतनेयुक्तः जातः पंचमभावस्य संधि ४।२६।३८।१ अयं तेनयुक्तः जा
तः षष्ठमभावः ५।१३।४८।३२ अयंतेनयुक्तः जातोरिपुभावस्यसन्धिः ६।०।५८।५५
एतेराशिषट्कयुक्ताअवशिष्टाः ससंधयोयः

| लंकोदयचक्रम् | | |
|---|---|---|
| मे | २७८ | मी |
| वृ | २९९ | कुं |
| मि | ३२३ | म |
| कं | ३२३ | ध |
| सिं | २९९ | वृ |
| कं | २७८ | तु |

ताः सर्वे एकत्र लिख्यते अथ भावस्थग्रहफलं खेटे संधिद्वयांतस्थे इति तद्यथा ग्रहे आरंभसंधेसकाशात् अधिके सति विरामसंधेः सकाशात् न्यूने सति तदा ग्रहो यस्मिन् भावे वर्तते तद्भावजं फलं भवेत् द्विसंधिभ्यां हीनेधिके ग्रहे सति पूर्वापरभावे फलं भवेत् तद्यथा आरंभसंधेसकाशात् ग्रहे हीने सति यद्भावो वर्तते तद्भावात्पूर्वभावस्य फलं ददाति यदा विरामसंधेः सकाशात् ग्रहो अधिको भवति तदा अग्रिमभावस्य फलं द

खेटे साधिद्वयांतस्थे फलं तद्भावजं भवेत् २८ हीनेधिके द्विसंधिभ्यां भवि पूर्वापरे फलं ग्रहसध्यंतरं कार्यं विंशत्या २० गुणितं भजेत् भावसध्यंतरेणाप्तं फलं विंशोपकाः स्मृताः २९ ॥

| तन्वादि द्वादशभावाः ससंधयः स्फ॰ ॥ | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| त॰ | ध॰ | स॰ | सु॰ | रि॰ | जी॰ | म॰ | ध॰ | क॰ | आ॰ | व्या॰ | व्य॰ |
| ० १८ १० १६ | १ १३ ४८ १० | २ ५ २८ ४४ | ३ ५ ८ ० | ४ ९ २८ ४८ | ५ १३ ४६ ३२ | ६ १८ १० १६ | ७ १३ ४८ ३० | ८ ५ २८ ४४ | ९ ५ ८ ० | १० ९ २८ ४८ | ११ १३ ४६ ३२ |
| स॰ | सु॰ | सं | सं॰ | स॰ | स | स॰ | स॰ | स॰ | स॰ | स॰ | स॰ |
| १ ० ५९ ५८ | १ २८ ३९ १७ | २ २२ १९ २१ | ३ २२ १८ २३ | ४ २६ ३५ ९ | ६ ० ५९ ९ | ७ ० ५८ ५५ | ७ २६ ३१ ७ | ८ २१ १८ २२ | ९ २३ १८ २२ | १० २६ ३५ ९ | ० ० ५९ ५५ |

उ॰

भा॰

इति लग्नकुंडलीचक्रं लिख्यते अथ ग्रहाणां विंशोपकात्मकभावफलमाह उदाहरणमेव व्याख्या सूर्यः ९।७।३० अस्य संधिः ९।२२।१९।२३ अनयोरंतरं १४।४८।५७ विंशत्या २० गुणितं २९६।१५।४०। भाव ९।५।८।० संधिः ९।२२।१९।२३ अनयोरंतरेण १७।११।२३ भजेत् अथ सवर्णितो भाज्य १०६५९४० भाजक ६१८८३ भाजकेन हतो भाज्ये यदाप्तं फलं

तदेव विंशोपकाः स्तनाः १७।१४ एवं चंद्रादीनां २९ इति रव्यादीनां विंशोपकात्मकानि भावफलानि अथ ग्रहा णां बलाबलं वक्ष्यति तत्र स्वबलमधिकारं विनाग्रहो नबली तत्रादौ राशौ द्रेष्काणे शान्नाह मेषस्य भौमः वृष स्योशनाः शुक्रः मिथुनस्य सौम्योबुधः कर्कस्य शशी चंद्रः सिंहस्य इनः रविः कन्यायाः वित् बुधः तुलायाः सि तः शुक्रः वृश्चिकस्यारो भौमः धनुषः इज्यो गुरुः मकरस्यार्किः शनिर्मंदः कुंभस्य मीनस्यांगिरा गुरुः एतेग्र

| इद्रेष्काणपाचक्रंलिख्यते॥ | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्री | मे | वृ | मि | क | सिं | कं | तु | वृ | ध | म | कुं | मी |
| १० | मं | बु | गु | शु | श | सू | सी | मं | बु | गु | शु | श |
| २० | र | चं | मं | बु | गु | श | श | सू | सो | मं | बु | गु |
| ३० | शु | श | र | सो | मं | गु | र | शु | श | सू | सो | मं |

भौमोशनः सौम्य शशी नवित् सि
तारेज्यार्कि मंदाग्रसोग्रहेश्वराः आद्याः
कुजाद्यारवितोपिमध्यमासितान्तती
याः क्रियतो द्रेकाणयाः ३०

हेश्वराः द्वादशराशिस्वामिनो भवंति अथ द्रेष्काणं स्वामिन उच्यते आद्या इति राशेस्तृतीयांशो दशांशात्मको द्रेष्काण उच्यते एकस्मिन् राशौ त्रयो द्रेष्काणाः अतः कस्मिन्नाशौ कि यत्संख्याको द्रेष्काणोस्तीति विचारयत्र थमश्चेत्तर्हि भौमात् द्वितीयश्चेद्रवेः तृतीयश्चेच्छुक्रमात् अन्यारीत्या क्रियते मेषादि द्वादशराशिषु द्रेष्काण याः द्रेष्काणस्वामिनो भवंतीति द्रेष्काणयाचक्रम् ३०॥

अथग्रहाणामुच्चनीचराशीन् भागांश्चाह सूर्यादीनांग्रहाणांतुंगदेउच्चराशयः स्युः सूर्यस्य अजः मेषः उच्चदिग्भिरंशैः चन्द्रस्यउक्षावृषः उच्चंगुणैस्त्रिभिरंशैर्भौमस्य नक्रोमकरः उच्चंअष्टयमैरष्टाविंशतिभिरंशैः बुधस्यकन्याउच्चंशरंकैः पंचदशभिरंशैः गुरोः कुलीरः कर्कः उच्चं भूतेः पंचभिरंशैः शुक्रस्यतोमीनः उच्चंभसंख्येसप्तविंशतिभिरंशैः शनेस्तुलाउच्चंनखसमितेः विंशतिभिरं

| अथग्रहाणामुच्चनीचानि | | | | | | | |
|---|---|---|---|---|---|---|---|
| सू | चं | मं | बु | वृ | शु | श | ग्रह |
| ०<br>१० | १<br>३ | ९<br>२८ | ५<br>१५ | ३<br>५ | ११<br>२७ | ६<br>२० | उच्च |
| सू | चं | मं | बु | बृ | शु | श | ग्रह |
| ६<br>२० | ७<br>३ | ३<br>२८ | ११<br>१२ | ९<br>५ | ५<br>२७ | ०<br>२० | नीच |

सूर्यादितुंगदमजोक्षवकंकन्या
कुलीरान्त्यतुलालवैः स्युः दि भि
गुणैरष्टयमैः शरैः कैः भूतैर्भसं
ख्यैर्नखसमितैश्च ३१ तत्सप्तमंनी

| अथांशाचक्रम् ॥ | | | |
|---|---|---|---|
| मे | वृ | मि | क |
| सिं | क | तु | वृ |
| ध | म | कुं | मी |

चमनेनहीनोग्रहोधिकश्चेद्भसभाद्विशोध्यः चक्रांतदं
शांकलवोवलंस्याक्रियेणतोलीदुभतोनवांशाः ॥ ३२ ॥

अथग्रहाणांनीचस्थानं

शेपरमोच्चमितिसर्वत्रज्ञेयंउच्चानिउच्चवलानयनंनवांशस्वामिनश्चाहव्याख्यातेषांसूर्याद्युच्चराशीनांसप्तमस्तुलादिकोराशिर्नीचअंशांस्तएवयथासूर्यस्यतुलानीचंदशभिरंशैःऽपरमं एवंचन्द्रादीनांज्ञेयंनीचानिअनेननीचेनग्रहोहीनः चंद्रसभाधिकः तदाचक्राद्वादशराशिभ्यःशोध्यःऽशेषस्यांशाः कार्याः नवभिर्भाज्याः लब्धंकलादिउच्चवलंस्यात् अथनवांशेषाउच्यंतेक्रियोमेषाः एणोमकरः तौलिः

ता॰ टी॰ २५

एतेमेषादिराशीनामत्रिरावृत्त्या आद्याः भवंतितेयथामेषसिंहधनुराशीनामाद्योमेषः वृषकन्याम

| अथमेषादिराशिविभागयुक्ताहद्देशाः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | र्क | सिं | क | तु | वृ | ध | म | कुं | मी |
| गु॰६ | शु॰ | बु॰६ | मगु | गु॰६ | बु॰ | श॰६ | बु॰७ | श॰६ | म॰७ | बु॰७ | गु॰१२ |
| शु॰६ | बु॰६ | शु॰६ | गु॰६ | शु॰५ | शु॰१ | बु॰८ | शु॰ध | शु॰५ | गु॰७ | शु॰६ | गु॰४ |
| बु॰८ | गु॰८ | गु॰६ | बु॰६ | श॰७ | शु॰४ | गु॰७ | बु॰८ | बु॰४ | शु॰८ | गु॰४ | बु॰३ |
| श॰५ | म॰३ | श॰६ | श॰४ | म॰६ | श॰२ | म॰२ | श॰६ | श॰४ | म॰४ | श॰५ | श॰२ |

मेषेंगतर्कौष्टशरेषुभागाजीवास्फुजि ज्ज्ञारशनैश्चराणांवृषेष्टषण्णाग- पूशानलांशाः शुक्रज्ञजीवार्ककुजेश हद्दाः ३३ युग्मेषंडगेषुनगांगभागाः सौम्यास्फुजिज्जीवकुजार्किहद्दाः क कैंद्रितकांगनगाब्धिभागाः कुजाः स्फुजिज्ज्ञेज्येशनैश्चराणां ३४ सिंहेंगभूताद्रिरसांग भागादिवेज्यशुक्रार्किबुधारहद्दाः स्त्रियांनगांशाब्धिनगाद्रिभागाः सौम्योशनोजीवकुजा र्किनाथाः ३५ तुलेरसाष्टाद्रिनगाद्रिभागाः कोणज्ञजीवास्फुजिदारनाथाः कीटेनगाब्धाष्टशरां गभागाभौमास्फुजिज्ज्ञेज्यशनैश्चराणां ३६ चापेरविद्यंबुधिपंचवेदाः जीवास्फुजिज्ज्ञारशनैश्च राणां॥ करराशीनामाद्योमकरः मिथुनतुलाकुंभराशीनामाद्यस्तुलाकर्कवृश्चिकमीनराशीनामा द्यः कर्कइत्याद्यचक्रम् २२ अथषडभिः श्लोकैर्मेषादिद्वादशराशिषुहद्देशानाह

अकस्यापनव्यांख्या सायथा मेषराशो प्रथम षडंशानां जीवो गुरुः ततः षडंशानांमास्फुजिच्छुक्रः ततोष्टानां अष्टानां ज्ञोवुधः ततः पंचाशानांमारोभौमः पंचांशानां शनैश्वरः स्वामी एवमेववृषादिष्वपि इतिहद्दाचक्रं ३७ अथ पंचवर्गी वलमाह त्रिंशत्स्वभइतिस्वभेस्वराशौग्रहे त्रिंशतलवाः ३० वलंस्वोच्चस्थेविंशतिर्वलं २० स्वहद्दास्थेपंचदशवलं १५ स्वद्रेष्काणस्थेदशवलं १० मुसल्लहेस्वनवांशस्थेपंच ५ लवाः प्रदिष्टाः उक्ताः वेदालवैवलस्य चतुर्थोंशोविं

मृगेनगाव्ध्यष्टयुगश्रुतीनांसौम्येज्येशुक्रार्किकुजेशहद्दाः ३७ कुंभेनगंगाद्रिशरेषुभागाः शुक्रेज्ञजीवारशनैश्चराणां मीनेर्कवेदानलनंदपक्षाः सितेज्यसौम्यारशनैश्चराणां ३८ त्रिंशत्स्वभेविंशतिरात्मतुंगेहद्देदचंद्राद्दशकंद्रकोणे मुसल्लहेपंचलवाः प्रदिष्टाविंशोपकावेदलवैः प्रकल्प्याः ३९ स्वस्वाधिकारोक्तवलंस्फुहृद्भे पादोनमर्द्धसमभेरिभेंधिः एवंसमीनीयवलंतदैक्येवेदोद्धृतेहीनवलः शरोनः ॥ ४० ॥ ४० ॥ ४० ॥

शोपकाः प्रकल्प्याः ३९ यदाग्रहः स्वगृहस्वोच्च स्वहद्दा स्वद्रेष्काण नवांशेषु पंच स्वाधिकारेषु कुत्रापि नास्ति तदा वल माह स्वस्वाधिकारे इति स्वस्वाधिकारोक्त वलस्य विभागः सुहृद्भे मित्र गृहे पादोनं चतुर्थांशोनं वलं ग्राह्यम् सम भेस मस्य गृहे अर्द्धम् अरिभे शत्रु गृहे धिं चतुर्थांशो वलं स्यात् तद्यथा गृहेस्य स्वगृहे त्रिंशल्लवाः वलंस्यात् मित्र गृहे पादोनं सार्द्धद्वाविंशतिः जाता २२।३०।

समभेर्ह्यं पंच दश ५५ जाता: शत्रुगृहे चतुर्थांश: सार्द्धा: सप्त जाता: ७।३० तथास्व हद्दायां पंचदश १५ मित्रहद्दायां सपाद: एकादश ११।१५ समहद्दायां सार्द्धा: सप्त: ७।३० शत्रु हद्दायां पादो नाश्चत्वार: ३।४५ तथास्वद्रेक्काणे दश १० मित्रे द्रेक्काणे सार्धा: सप्त: ७।३० समद्रेक्काणे पंच ५ शत्रु द्रेक्काणे सार्द्धद्वयं २।३० एवंस्व नवांशे पंच ५ मित्र नवांशे पादो नाश्चत्वार ३।४५ समनवांशे सार्द्धद्वयं २।३० शत्रु नवांशे पादमेक १।१५ वलंस्यात् एवं पंच वर्गीवलसमानीय तदैक्ये पंचानां योगे वेदा घ्नतो चतुर्भि भक्तियल्लब्धं तद्दिंशोपकात्मकं ग्रहाणां वलं भवति शरेन: पंचभ्योन्यून: हीनवलोग्रहोज्ञेय: उक्तं च पंचाल्पोहीनवीर्य: स्यादधिकोमधेउच्यते दशाधिकोवलीप्रोक्त: पंचवर्गीवलादिदं वलं चक्रं अथ क्रमप्राप्तमुदाहरणं प्रदर्शनार्थं वक्ष्यमाणमित्र सम शत्रवो लिख्यंते उदाहरणं सूर्य: ८।७।३०।६ अस्य मकर राशौ स्थितत्वाद्गृहेश: शनिरयं सूर्यस्य शत्रु: अत: कारणात् ग्रहे प्राप्तं वलं सार्द्धा: सप्त: ७।३० अथोच्चवलं सूर्यस्यनीचंध: ९० अनेन हीनो रवि: २।२७।३०।६ अस्यांशा: ८७।३०।६ नवभिर्भक्ताजातं सूर्योच्च वलं मकरराशौ सूर्यस्यस प्तांशा: त्रिंशत् कला: विद्यंते मकरराशौ हद्दया आदौ सप्तांशा: अयं सप्ताधिकोग्रिम सप्त मध्ये वर्तते इति कारणात् अतो हद्देशो गुरु: अयं सूर्यस्य समा भवति समहद्दायां प्राप्तिवलं ७।३० अथ त्रैराशिक वलं मकरराशौ प्रथम दशाक मध्ये वर्तनेतदंशो गुरु: अस्य समत्वात्प्राप्तं त्रैराशिक वलं ५।१० अथ मुसल्लहवलम् नवांश गणनया जातो मुसल्लेहशो गुरु: अस्य समत्वात् प्राप्त नवांशक वलं २।३० पंचानां योग: ३२।१३ चतुर्भिर्भक्त: जातं सूर्यस्य विश्वात्मकं

वलं ८।३। एवंचंद्रादीनांज्ञेयं पंचवर्गीचक्रं लिख्यते अथद्वादशांशवर्गीचक्रमाह क्षेत्रमिति क्षेत्रंगृहंहो
रात्रिवर्ग२१ः चतुर्वर्ग२१ः पंचवलः षड्वलः सप्तवलः अष्टवलः अंकबलः दशेः काद्दशावलः द्वादशाव

| सू. | चं. | मं. | बु. | वृ. | भृ. | श. |
|---|---|---|---|---|---|---|
| चं | सू. भृ. | श | श | श | चं. सू. | मं. बु. गु. |
| मं. बु. वृ. | श. | सू. श. | सू. श. | सू. श. बु. | मं. बु. गु. श. | चं. श. |
| श. | मं. बु. श. | चं. बु. गु. | चं. मं. गु. | चं. मं. श. | ० | सू. |

क्षेत्रंहोरा२पथिपंचांगसप्तवस्वंका
प्रोशार्कभागाः सुधीभिः विज्ञात
व्यालग्नसंस्थाः शुभानांवर्गाः श्रे
ष्टाः पापवर्गाः अनिष्टाः ४१ ओजे
खीदोः समद्युस्योर्होरेस्टहार्धप्र
मितेविचिंत्येद्रकाणाषाः खेषुनवर्क्षनाथाः तुर्यांशपाः स्वर्क्षज
केंद्रनाथाः ॥४२॥

| अथपंचबर्गीचक्रमलिख्य. | | | | | |
|---|---|---|---|---|---|
| ग्र. | धी | स्व. | मि | स. | श. |
| मि | गृ. | ३० ० | २२ ३० | १५ ० | ७ ३० |
| सं | ह | १५ ० | २१ २५ | ७ ३० | ३ ४५ |
| श. | द्रे. | १० ० | ७ ३० | ५० ० | २ ३० |
| नव श. | मु. | ५ ० | ३ ४५ | २ ३० | १ १५ |

लः एतेद्वादशभागः लग्नसंस्थाः लग्नसमयेविद्यमानग्रहाणांसुधीभि। विज्ञातव्याःशुभाणांशुभ
ग्रहाणांवर्गाःश्रेष्टाः शुभफलदाज्ञेयाः पापग्रहाणांवर्गाश्चतस्पुः तदाअरिष्टाः दुष्टफलदाज्ञेयाः
४१ अथहोराद्रेक्काणतुर्यांशप्रमाणमानडोअतिभ्राजेविषमराशौग्रहार्द्धपंचदशभागः

तत्प्रमितेरवींद्वोहोरेविचिंत्येज्ञेयेतद्यथाप्रथमपंचदशभागमध्येरवेर्यस्यतस्तंतरंचंद्रस्यतथासम राशौचंद्ररव्योर्विचिंत्यंअथद्रेक्काणेशउच्यंतेराशौस्त्रिभागोदशांशपरिमितोद्रेक्काणोज्ञेयः यस्य द्रेक्काणविचारः क्रियतेसपत्प्रथमविभागमध्येतस्यसयस्मिन्राशौनिष्टतितद्राशिस्वामिनएवद्रे क्काणाधीशत्वंतृतीयद्रेक्काणश्चेत्तदास्वराशेः सकाशान्नवमोयोराशिः तत्स्वामिनएवद्रेक्काणा धीशत्वं अथचतुर्थांशस्वामिनउच्यंतेस्वर्क्षजकेंद्रमथाऽतिस्वर्क्षमग्रहाधिष्टितोयोराशिस्तस्मा

ओजर्क्षेपंचमांशेशाः कुजार्कीज्यभार्गवाः सममेव्यत्ययाज्ज्ञेयाद्वादशांशस्वभा

त्स्मृताः ॥४४॥

ज्ञातानिकेंद्राणितन्नाथाः नवचतुर्थांशस्वामिनः तद्यथाराशेस्त्रिंशदंशास्तस्यचतुर्थांशःसा र्द्धः सप्त ७।३० तत्रप्रथमविभागमध्ये ७।३० स्वर्क्षस्वराशिस्वामिनएवाधिपत्यंद्वितीयविभागमध्ये १५।० केंद्रनाथः स्वराशेस्तत्सकाशात्स्वचतुर्थीयोराशिः तत्स्वामिनएवाधिपत्यंतृतीयविभागः २२ ।३० मध्येस्वराशेः सकाशात्सप्तमोयोराशिः तत्स्वामिनएवाधिपत्यंचतुर्थविभागः ३० मध्येस्व राशेः प्राकाशाद्दशमोयोराशिः तत्स्वामिन् एवाधिपत्यं ४२ अथपंचमांसद्वादशांशेशाना

हओजर्क्षेइतिपंचमांशप्रमाणंषडंशाः ६ एवंराशौपंचभव

तितत्रोजर्क्षेविषमराशौप्रथमपंचमांसस्वामीकुजः

द्वितीयं पंचमांश स्वामी आर्किः शनिः तृतीयं पंचमांश स्वामी ज्यो गुरुः चतुर्थं पंचमांश स्वामी ज्ञो बुधः पंच
मपन मांश स्वामी भार्गवः शुक्रः समभसम राशौ व्यत्ययाद्विपरीताज्ञेयाः तद्यथा सम राशौ प्रथम पंचमंश
स्वामी शुक्रः द्वितीय पंचांश स्वामी बुधः तृतीय पंचांश स्वामी गुरुः चतुर्थं पंचांश स्वामी शनिः पंच पंचांश
स्वामी भौमः अथ द्वादशांश स्वामीनः उच्यते द्वादशांशाः स्वभात्सुराशेः सकाशात् स्मृताः तद्यथा द्वादशां
श प्रमाणं सार्द्धं मंशद्वयं २।३० एवं राशौ द्वादश भवंतिते यथा एतत्प्रमाणेन २।३० यत्सरव्येंशेग्रह स्तिष्ट

वलीकृतो व्योमचरोंगशैलवस्वंकदिग्रुद्रगुणाः स्वरामैः भक्तो
गतास्तर्कनभाष्टनंददिग्रुद्रभागाः कुयुताः क्रियात्स्युः॥४४॥

तिस्वराशितस्तत्संख्या राशेद्वादशांशेशोज्ञेयः ४३ अथ षट्सप्ताष्टनवादशैकादशांशेशानयनमाहलवीकृतइ
ति व्योमचरोग्रहोलवीकृतः यथा राशयः त्रिंशात् गुणिताः अधस्थितांशयुक्ताः एवं ग्रहोंशात्मकः कार्यः ष
ट्स्थाने स्थाप्यः क्रमेण रस ६ अंग ६ शैल ७ वसु ८ अंक ९ दिक १० रुद्रः ११ गुणाः सतत्र खरायै ३० त्रिंशताभ
क्तो यल्लब्धं ते गतास्तर्क नगाष्टनंददिग्रुद्र भागा भवंति एते कुयुताः एकयुक्ताः संतः क्रियान्मेषमारभ्यग
णनायां यत्र विश्रांतिः तद्राशिस्वामी तद्वर्गस्य ज्ञेयः एकफक्त लब्धं वदि द्वादशाधिकं भवति तदा द्वादशभिः 

## एतत्पंचवर्गीबलचक्रम्

| ग्रहा | सूर्य | चन्द्र | भौम | बुध | गुरु | शुक्र | शनि | ग्रह |
|---|---|---|---|---|---|---|---|---|
| गृ॰ | ७<br>३० | ७<br>३० | ७<br>३० | ७<br>३० | ७<br>३० | १५<br>० | १५<br>० | गृ॰ |
| उ | ९<br>४ | ४<br>३२ | १५<br>१० | १०<br>१० | ०<br>३६ | ६<br>२३ | १८<br>३२ | उ॰ |
| हृ॰ | ७<br>३० | ४<br>४५ | ७<br>३० | ७<br>३० | १५<br>० | ७<br>३० | १५<br>० | हृ॰ |
| द्रे॰ | ५<br>० | २<br>३० | २<br>३० | २<br>३० | ७<br>३० | १०<br>० | ५<br>० | द्रे॰ |
| मु॰ | २<br>३० | ५<br>० | २<br>३० | १०<br>१५ | ५<br>० | २<br>३० | ३<br>४५ | त॰ |
| यो॰ | ३२<br>१३ | २३<br>१७ | ३५<br>१ | २९<br>३ | ५८<br>६ | ४१<br>२३ | ५७<br>१७ | यो॰ |
| वि॰ | ८<br>२ | ५<br>४९ | ८<br>४७ | ७<br>१५ | १५<br>३१ | १०<br>२० | १४<br>२९ | वि॰ |

तदुष्टं कार्यं उदाहरणं सूर्यः ९।७।३०।६ एतस्य मकरराशौ स्थितत्वात् गृहेशः शनिः अथ होरा मकरराशौ प्रथम पंचदशभागमध्येऽस्ति अतो होरेशश्चंद्रः अथ त्रिलवः सूर्यः प्रथमभागमध्येऽस्ति अतो द्रेष्काणाधीशः शनिः अथ चतुर्लवः सूर्यो द्वितीय चतुर्थांशमध्ये वर्तते अतः कारणात् मकरराशेः शकाशात् चतुर्थो राशिर्मेषः तत्स्वामी भौमः एवं चतुर्लवस्वामी भौमः अथ पंचमांशस्वामी बुधः अतः पंचमांशः सूर्यः समराशौ द्वितीय विभागमध्ये वर्तते अथ षडंशः सूर्यस्यांशाः २७७।३०।६ षड्गुणिताः १६६५।३।३६ त्रिंशात् भक्ताः २ लब्धं ५५ कुयुक्तं ५६ द्वादशभि १२ स्तष्टशेषं ८ मेषात् गणनया जातो वृश्चिकराशिः तत् स्वामी भौमः एवं जातः षडंशस्वामी भौमः अथ सप्तांशाः अंशाः

## द्वादशांशचक्रम्

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २<br>३० | ५<br>० | ७<br>३० | १०<br>० | १२<br>३० | १५<br>० | १७<br>३० | २०<br>० | २२<br>३० | २५<br>० | २७<br>३० | ३०<br>० |

२७७।३०।६ सप्तभिर्गुणिताः १९४२।३०।४२ त्रिंशत् भक्ता लब्धं ६४ कुयुक्तं ६५ द्वादशभि १२ स्तष्टशेषं ५ मेषात् गणनया जातः सिंहरासिः तत्स्वामी ॥ ॥॥

मीसूर्यः एवंजातः सप्तमांसस्वामीसूर्यः अथाष्टांशः अंशाः २७।३०।६ अष्टभिर्गुणिता २२२०।०।
४८ त्रिंशता भक्ता लब्धं ७४ कुयुतं ७५ द्वादशभिः १२ नष्टं शेषं ३ मेषाद्गणनयाजातो मिथुनराशिः
तत्स्वामी बुधः अथ नवांशः अंशाः २७।७।३०।६ नवभिर्गुणिता २४८७।३०।५४ त्रिंशता भक्ता ल
ब्धं ८३ कुयुतं ८४ द्वादशभि १२ स्तष्टं शेषं ० मेषाद्गणनयाजातो मीनराशिः तत्स्वामीगुरुः एवंजाते
नवांशस्वामीगुरुः अथ दशांसः अंशाः २७।३०।६ दशभिर्गुणिता २७७५।१।७ त्रिंशता भक्ता ल
ब्धं ९२ कुयुतं ९३ द्वादशभिः १२ स्तष्टं शेषं ९ मेषाद्गणनयाजातो धनराशिः तत्स्वामीगुरुः एवंजा

एवंद्वादशवर्गोस्याद्ग्रहाणां वलसिद्धये स्वोच्चमित्रशुभाः श्रेष्ठा नीचारिक्रूरतोऽशु

भाः ४५॥

तो दशांशस्वामीगुरुः अथैकादशांशाः अंशाः २७।३०।६ एकादशभिर्गुणिता ३०।५२।३१।६ त्रिं
शता भक्ता लब्धं १० कुयुतं १०२ द्वादशभि १२ स्तष्टं शेषं ६ मेषाद्गणनयाजातः कन्याराशिः त
त्स्वामी बुधः एवंजातः एकादशांशस्वामी बुधः अथ द्वादशांशाः एवं द्वादशांशविभागगणनया च
तुर्थविभागमध्ये वर्तते अतः कारणात् मकराद्गणनया जातश्चतुर्थो मेषराशिः तत्स्वामी भौमः
एवंजातो द्वादशांशस्वामी भौमः एवं चंद्रादीनामपि ज्ञेयं ४४ अथ ग्रहाणां द्वादशवर्गी चक्रं अ
थ द्वादशवर्गफलं एवं ग्रहाणां वलसिद्धये द्वादशवर्गी स्यात् द्वादशवर्गी स्वोच्चमित्रशुभाः ३२

श्रेष्ठाः तद्यथाय स्य ग्रहस्य द्वादशवर्गी क्रियते स चेत्सुग्रहादिषु अथवा स्वोच्चवर्गे अथवा शुभग्र
हस्य वर्गे तिष्ठति तदा श्रेष्ठा शुभफलदात्री स ग्रहो यदि नीचवर्गे अथ शत्रुवर्गे अथवा पापग्रहस्य
वर्गेक तिष्ठति तदा अशुभा फलदात्री ४५ अथ द्वादशवर्ग्यां शु
भपापग्रहवर्गाफलनिर्णयः कथं स्यादित्यत आह एवमिति

एतद्द्वादशवर्गचक्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| र | चं | मं | बु | गु | शु | श | ग्र |
| श | बु | ह | व | ह | मं | शु | ग्रं |
| चं | सू | सू | सू | चं | सू | सू | हो |
| श | श | श | मं | शु | चं | सू | त्रि |
| मं | व | व | ह | बु | शु | सू | चं |
| बु | श | व | ह | शु | मं | शु | प |
| मं | शु | बु | शु | बु | श | मं | व॰ |
| सू | शु | व | श | बु | शु | श | सम |
| बु | श | शु | चं | शु | बु | ह | अ |
| ह | चं | शु | चं | शु | श | व | नव |
| शु | श | श | मं | बु | श | ह | द |
| बु | चं | श | व | बु | शु | व | सर्वा |
| श | शु | शु | मं | मं | सू | व॰ | राग्र॰ |

एवं ग्रहाणां शुभपापवर्गपंक्तीद्वयं वीक्ष्य शुभाधि
कत्वे दशाफलं च भावफलं वाच्य शुभत्वनिष्टत्वं
शुभाधिके त्वे ॥४६॥

एवं ग्रहाणां शुभपापवर्गपंक्तिद्वयं वीक्ष्य तद्यथा पूर्वोक्तप्रका
रेण ग्रहाणां द्वादशवर्गी कार्या तत्र ग्रहे होरादि द्वादशस्थानेषु
कियंतः शुभग्रहवर्गाः कियंत इति विचार्याः शुभग्रहस्य
संख्याभि वा लेख्या पापग्रहसंख्याभि वा लेख्या पंक्तिद्व
पंक्त्यांतरं कार्यं यदि शुभाधिकत्वं
शुभग्रहस्य शेषमवशिष्टं ॥

नरात सस्य दशाफलंभाव फलं दशमेच चाद्यं अदि अस्तु भाधिकत्वं अशुभग्रहस्य शेषम वशिष्ट तदा तद्ग्रह
स्य दशाफलं माह फलं वा शुभमेव वाच्यं ४६ ॥ अथग्रह भेदेन सौम्य पापवर्ग भेदेनच फलतारतम्यमाह क्रूरोपीति
यस्य ग्रहस्य द्वादश वर्गिका क्रियते सचेत् क्रूरोपि यदि पाप ग्रहोपि भवति द्वादश वर्ग्यां सौम्यग्रहाधिक वर्गेण
शालिते युक्तो भवति तदा शुभः शुभ फलदः शुभखेचरश्चेत् तद्यथा यस्य ग्रहस्य द्वादश वर्गका क्रियंत स
यदि शुभग्रहो भवति द्वादश वर्ग्यां शुभग्रहाधिक वर्ग प्राप्तो भवति तदाति सौम्यः अत्यंत शुभफलदाता
सौम्योपि पापाधिक वर्गयोगान्नेष्ट तद्यथा यस्य द्वादश वर्गिका क्रियते सपदि शुभग्रहो भवति द्वादश वर्ग्यां

क्रूरोपि सौम्याधिक वर्गशालोस्तुति सौम्यः शुभखेचरश्चेत् सौम्योपि पापाधिक वर्गयो
गान्नेष्टेति निद्यः खलु पाप खेटः ४७ रोषेशमित्रोच्चारि क्रमेण चिंत्यं तनोस्य नयैव रीत्या
भावेष्व सर्वेष्वपि वर्ग चक्रं विलोक्य ततत्फल मूह नोयम ॥ ४८ ॥ ४८ ॥

पाप ग्रहाधिक वर्ग प्राप्तो भवति तदा नेष्टे अशुभ फलदः पाप खेटः तद्यथा यस्य द्वादश वर्गिका
क्रियते स्यदि पाप ग्रहो भवति द्वादश वर्ग्यां पाप ग्रहाधिक वर्ग प्राप्तो भवति तदा अतिनिद्यः अत्यंत दुफ
लदाता ४७। अथ द्वादश भावानां शुभाशुभफल माह राशी सेति तनोर्लग्नस्याप्य नयैव रीत्या शुभग्रहा
धिक पापग्रहाधिक वर्ग शालत्वेन शुभाशुभ फलं चिंत्यं विचार्यं यथा लग्नं शुभग्रहाधिक वर्ग शालि-
स्या दृष्य वा लग्न स्वामी शुभ ग्रह ; सन्मित्र गृहेस्व गृहेस्वोच्चे वा तदा शुभ फलं ज्ञेयं ॥ ॥ ३४

ता॰
टी॰
३५
३७

यदि लग्नं स्वामी समग्रहे वर्तते तदा शुभाशुभफलाभावान्यदि लग्नं पापग्रहाधिवर्गशालस्या ऽथवा स्वामी पापग्रहः सन् शत्रुग्रहे नीचे वा तदाऽशुभं फलं ज्ञेयं एवं सर्वेष्वपि भावेषु लग्नादि षोडशभावेषु चवर्गचक्रं षोडश वर्गिकायातां दृष्ट्वा ततद्भावस्थ शुभाशुभफलमनयैव रीत्या ऊहनीयं विचारणीयं इति षोडशवर्गिका। ४८ अथ लग्ने किं विचार्यमित्यत आह शरीरेति वर्षलग्नं प्रश्नलग्नं चांगी कृत्वा शरीरादि सर्वं विचार्यं तद्यथा स्वशरीरं कृशं पुष्टं च वर्णः रक्तः श्वेतः श्युक तनु निभ इत्यादि चिन्हं मशकादि आयुर्जीवनं कियत् वयोमानं बालं यौवनं वार्द्धिकमिति सुखं असुखं सुखं दुःखं जातिः ब्राह्मणादिः शीलमाचरणं एवं मतिमान् बुद्धिमान् लग्नात् सर्वं विचिंत

शरीरवर्णौ चिन्हायुर्वयोमानं सुखासुखासुखं जातिः शीलं चं मतिमान् लग्ना त्सर्वं चिंतयेत् ४९ सुवर्णं रूप्य एलानि धातुर्द्रव्यं सखाधने भ्रातृभ्रात्याष्वापर्क्रि स्खलतसाहसं ५० पितृवित्तंनिधिक्षेत्रम् ग्रहं भूमिश्चतुर्यतः ॥

येत् ४९ अथ धनभवने किं विचार्यमित्यत आह सुवर्णेति सुवर्णं रूप्य रत्नानि निधातु गैरिकादिः द्रव्यं कांस्यादि सखा मैत्री विचारः धने धनभवने एतावद्विचार्यं अथ सहज भवने किं विचार्यमित्यत आह विक्रमे सहज भवने एतावद्विचार्यं भ्राता सहजः भृत्यः सेवकः अध्वायानं पित्रे पितृसर्वंधि सूवलं कार्यं भ्रंशः साहसं साहस कर्म एतानि सहज भवनाद्विचार्याणि ५० अथ चतुर्थभवने किं विचार्यमित्यत आह पितृ विन्तमिति पितृ वित्तं पितुर्द्रव्यं निधिः निक्षिप्त वस्तु क्षेत्रं कृष्यादि गृहं भूमिः तुर्यतः चतुर्थ भवने एतावत् विचारणीयानि

ता॰ दी॰ ३६ ३५

अथपंचमभवनेकिंविचार्यमित्यतआहपुत्रे इतिपुत्रेपंचमभवनेएतावद्विचार्यंमंत्रः धनोपायः गर्भ विद्याआत्मजः पुत्रेएतेषामीक्षणमवलोकनंकार्यं ५१ अथषष्ठंभवनेकिंविचार्यमित्यतआहरिपा विति रिपौषष्ठभवनेएतावद्विचार्यंमातुलाः मांद्यंरोगः अरिः शत्रुः चतुष्पाद्वाः वैरिः वैरः पराश्रयः भी र्भयंव्रणःक्षतं अथसप्तमभवनेकिंविचार्यमित्यतआह द्यूनेइ नद्यूनेसप्तमभवनेएतावद्विचार्यंकल त्रंजायावाणिज्यंवाणिकर्म कर्मनष्टंनष्टवस्तुविस्मृतिः विस्मरणं एतेषांसंकथाकथनंह्नंतह

पुत्रेमंत्रधनोपगर्भविद्यात्मजेक्षणं ५१ रिपौमातुलमांद्यारिचतुष्पाद्वैरिभीव्रणान्
द्यूनेकलित्रवाणिज्यनष्टविस्मृतिसंकथाः तावत्कलिमार्गादिचिंत्यंद्यूनेग्रहो
शुभाः ५२ मृत्यौचिरंतनंद्रव्यंमृतवित्तंरणोरिपुः दुर्गस्थानंमृतिर्नष्टंपरिवारोमनो
व्यथा ॥५३॥

द्रव्यंनस्यअध्वामार्गविचारः कलिः कलहविचारः मार्गादिपात्राविचार
द्यूनेसप्तमभवनेशुभः पापोवाविद्यमानोग्रहः अशुभः अनिष्टफलदः ५२ अथअष्टमभवने
किंविचार्यमित्यतआहमृत्यावितमृत्यौअष्टमस्थाने एतावद्विचार्यंचिरंतनंद्रव्यंप्राचीनं
द्रव्यंमृतवित्तंमृतस्यविचरणं संग्रामः रिपुः शत्रुः दुर्गस्थानंमृतिर्मरणंनष्टंनष्टवस्तुपरिवा
रः कुटुंबंमनोव्यथा मानसीव्यथा ॥५३॥ अथनवमभवनेविचार्यमित्यतआहधर्मेइति

धर्मेनवमस्थानेएतावद्विचार्यंरतिःक्रीडापंथायात्राविचारः धर्मोपापंधनंसाधनंविचिंतयेत् अ
थदशमभवनेकिंविचार्यमित्यत आह व्योम्नि दशमभवनेएतावद्विचार्यंमुद्रा राजमुद्रांपरं पु
एयंउत्कृष्टपुण्यंराज्यंवृद्धिंभाग्यवृद्धिंपैत्रकंपितुःसंबंधिः५४ अथैकादशभवनेकिंविचार्य
मित्यत आह आयेइति आयेएकादशस्थाने एतावद्विचार्यो सर्वार्थःसर्वद्रव्यप्रयोजनंधान्यार्षःधा
न्यमौल्यं कन्यामित्रं चतुष्पदाः गजाश्वादिराज्ञः वित्तंराज्यंद्रव्यंपरिवारः कुटुंबविचारः भूरिशः

धर्मेरतिस्तथापंथाधर्मोपापंविचिंतयेत् व्योम्निमुद्रांपरंपुण्यंराज्यंवृद्धिंचपैत्रकं ५४
आयेसर्वार्थधान्यार्षकन्यामित्रचतुष्पदाः राज्ञोवित्तंपरीवारोलाभोपायांश्चभूरि
शः ५५ व्ययेवैरनिरोधोर्तिव्ययादिपरिचिंतयेत् ५६ लग्नांबुद्यूनकर्माणिकेंद्रमुक्तं
चकरकं चतुष्टयंचात्रखेटोवलीलग्नेविशेषतः ५७॥

भूयांसः लाभोपायः प्राप्त्युपायः ५५
अथव्ययभवनेकिंविचार्यमित्यत आह व्ययेद्वादशभवने एतावद्विचार्यं वैरिनिरोधः शत्रुकृ
तावरोधः आर्तिः पीडा व्ययादि एतावद्विचिंतयेत् ५६ अथ बलिष्ठग्रहस्यलक्षणमाह लग्ना
मितिलग्नः अंबु चतुर्थंद्यूनंसप्तमंकर्मदशमंएतेषांस्थानानां कंटकंचतुष्टयं चेतसंज्ञा कृता
अत्रकेंद्रस्थिःखेचरोग्रहोबलीज्ञेयः तत्रापिचतुर्थासप्तमदशमस्थानापेक्षयालग्नस्थस्थोग्रहोविशे

अथ ग्रहाणां शुभस्थानोनि वदन् वलिष्टयोगमाह लग्नमिति लग्नं कर्म दशमं अस्तं सप्तमं तुर्यं चतुर्थं आयं एका
दशं सुतं पंचमं अंकेन नवमं एषु स्थानेषु ग्रहो वली तत्र यथादिममादिमस्थानमतिक्रम्य यथाक्रममग्निमस्था
नापेक्षया पूर्वपूर्वस्थो ग्रहो विशेषण वलिष्टः तद्यथाः आदौ नवमस्थो ग्रहो वलीष्टस्तदपेक्षयापास्तदपेक्षया
पंचमस्थो वलिष्टस्तदपेक्षया एकादशस्थस्तदपेक्षया चतुर्थस्तदपेक्षया सप्तमस्थस्तदपेक्षया दशमस्त
दपेक्षया लग्नस्थो वलिष्ट इत्यर्थः एतत्तु सर्वग्रहाणां साधारणं वलमुक्तं अथ चंद्रमाः सत्रिवित्तेषु तृतीय
द्वितीय सहितेषु पूर्वोक्तेषु स्थानेषु वली ज्ञेयः तत्र द्वितीये वलिष्टश्चंद्रः तदपेक्षया तृतीये वलिष्टस्तदपे

लग्नकर्मास्ततुर्यायसुतांकस्थो वली ग्रहः यथादिमं विशेषेण सत्रिवित्तेषु
चंद्रमा ५८ कुजः सत्रिषु पृच्छायां सूतौ यान्यत्र चिंतयेत् भावानवेत्य शस्ताः सु
रिफाष्टरिपवोऽशुभाः दीप्तांशातिक्रमे शस्ता इमेपीति विचिंतयेत् ॥ ५९ ॥

क्षया नवमस्थास्तदपेक्षयास्तदपेक्षया पंचमस्थास्ततः पूर्ववत् ज्ञेयः अथ भौमकुजेति कुजो भौमः सत्रिषु तृती
यस्थानसंहितेषु प्रागुक्तेषु स्थानेषु वलिष्टो ज्ञेयस्तत्र भौमस्तृतीये वलिष्टस्तदपेक्षया नवमस्थस्ततः पूर्ववत् ज्ञे
य एवमेतत् स्थानस्थं ग्रहं पृच्छायां पत्रलग्नसूतौ जन्मनि अन्यत्र वर्षलग्नादौ च चिंतयेत् इत्थममुना प्रकारेण
नवसस्थाका भावाः शस्ताः शुभफलदाः स्युः ग्रहाधिष्टा द्वादशाष्टमषष्टभावाः अशुभाः स्युरिमे द्वादशाष्ट
म षष्ट भावा अधिष्टित ग्रह दीप्तांशान् अतिक्रम्य वर्तंते तदातेपि भावा शस्ताः शुभफलदातारः स्युः ३९

इति चिंतयेत् तत्राप्यधिष्टितग्रहदीप्तांशमध्ये इमेरिकाष्टम् रिपुभावायादिस्युस्तेदेवानिष्टा इत्यर्थः ५९ अत्रत्रै राशिक स्वामिनआह त्रिराशिया इति दिने दिवा वर्षप्रवेशे मेषाच्चतुर्णां राशीनां सूर्यसितार्किशुक्राः स्वामिनः स्युः तद्यथा दिवावर्षप्रवेशे मेषलग्नतदा सूर्यः वृषस्य शुक्रः मिथुनस्यार्किः शनिः कर्कस्य शुक्रः निशिरात्रौ वर्षप्रवेशे मेषादीनां चतुर्णां राशीनां इंद्ज्येंदुबुधक्ष्माजाः स्वामिनः तद्यथा: रात्रौ मेषलग्नेस्वामी गुरुः वृषस्य चन्द्रः मिथुनस्यबुधः कर्कस्य भौमः एते हरिभात् सिंहाच्चतुर्णां राशीनां विलोमं विपरीतं-

त्रिराशियाः सूर्यसितार्किशुक्रादिने निशिज्येंदुबुधक्ष्माजाः
मेषाच्चतुर्णां हरिभाद्विलोमं नित्यं परेष्वार्कि कुजेज्यच
न्द्राः ॥ ६० ॥

ज्ञेयं मेषादीनां ये दिने शीरते सिंहादीनां रात्रावीशाः ये मेषादीनां रात्रीशास्ते सिंहादीनां दिनेशा इत्यर्थः तद्यथा दिने सिंहलग्नस्य गुरुः कन्यायाश्चन्द्रः तुलाया बुधः वृश्चिकस्य भौमः रात्रौ सिंहस्य सूर्यः कन्याया शुक्रः तुलायाः शनिः वृश्चिकस्य शुक्रः परेषु धनुरादिषु चतुर्षु राशिषु नितमस्तदा दिवा रात्रौ वर्षप्रवेशे आर्कि कुजेज्य चंद्राः स्वामिनः तद्यथा धनुषः शनिः मकरस्य भौमः कुंभस्य गुरुः मीनस्य चंद्रः अनयोर्दिवा रात्रौ वर्षप्रवेशे सति विपर्ययो नास्तीत्यर्थः ६० ॥

अथैतस्यप्रयोजनमाह वर्षेशार्थमिति एतेवर्षेशार्थंवर्षेशनिर्णयार्थंदिननिशाविभागेतत्त्रिराशि
पाउक्ताः पंचवर्गीवलाद्यर्थं पूर्वोक्तान् द्रेक्काणेशान् विचिंतयेत् ६१ अथक्रमप्राप्तोदाहरणप्रदर्श
नार्थं वर्षतंत्रोक्तंचतुर्भिः श्लोकैर्वर्षेशनिर्णयमाह तत्रादौ अधिकारिणश्चाहजन्मेतिजन्मलग्न
पतिः जन्मलग्नस्वामी अब्दलग्नयोर्वर्षलग्नस्वामीमुथहाधिपोमुंथहास्वामीत्रिराशिपः त्रै
राशिकस्वामीसूर्यसिनार्कि शुक्राइत्यादिनात्रैराशिकेश्वरोज्ञेयः अन्हिदिवावर्षप्रवेशेसूर्यराशि

वर्षेशार्थंदिननिशाविभागोक्तास्त्रिराशिपाः पंचवर्गीवलाद्यर्थं द्रेक्काणेशान् विचिंतये
त् ६१ इतिसंज्ञाविवेकेग्रह प्र॰ मा॰ जन्मलग्नपतिरब्दलग्नयोर्मुथहाधिपइतस्त्रिराशि
पः सूर्यराशिपतिरन्हिचन्द्रमाधीश्वरोनिशिविमृश्यपंचकं १ वलीएषांतनुमीक्षमा
णः सवर्षपोलग्नमवीक्षमाणः॥

पतिदिनेशोज्ञेयः निशिरात्रौ वर्षप्रवेशेसति चन्द्रमा अ
धीश्वरः चंद्राधिष्ठित राशीशोज्ञेयः सएवरात्रस्वामीज्ञेयः अनयारीत्याग्रहपंचकंविमृश्यविचा
र्य १ एवंपंचाधिकरणोज्ञात्वातेषांदृग्वलं पंचवर्गीवलंचज्ञात्वावर्षपतिनिर्णयमाह वलीयइ
तिएषांपंचानामधिकारिणांमध्येयोग्रहोवलीपंचवर्गीवलाधिकतनुलग्नं ईक्षमाणः पश्य
ति सवर्षपोवर्षस्वामीज्ञेयः वलीष्टेपिग्रहोलग्ननसमीक्षमाणः लग्ननपश्यतितदावर्षाधि
पोनैवस्यात् यदावलस्यसाम्येपंचवर्ग्यांसर्वेतुल्यवला

स्तदा दृष्ट्यातिरेकतः स्यात् यथायोऽधिकदृष्ट्या लग्नं पश्यति विदुः वदंति २ दृष्टिसाम्ये चाह दृगिति सर्वेषां दृगिति सर्वेषां एवं साम्ये दृष्टिसाम्येपि आदिशब्दाद्वलसाम्येऽप्यावानिर्वलत्वे वर्षाधिपः वर्षेश्वरः भवहेश्व रः स्यात् चेत्यं चेत्यं चाधिकारिणः सवलायद्यपि तनुं लग्नं नेक्षमाणाः न पश्यंति तथापि वार्षाधिकः अंकतः यस्यैवं बलमाधिक्यं स एवाब्दस्य वर्षस्य विज्ञः स्वामी विचिंत्यः ३ अथ केनचिन्मतेन दृष्टिव लसाम्य वर्षाधिपति निर्णयमाह वलादीनिव लसाम्ये आदिशब्दाद्दृष्टिसाम्ये च अन्हि दिवा वर्षप्रवे

दृगादिसाम्येप्यथ निर्वलत्वे वर्षाधिपस्यान्मुथहेश्वरस्तु पंचापि चेन्नो तनुवीक्षमाणा वी र्याधिकोब्दस्य विभुर्विचिंत्यः ३ वलादिसाम्ये रविराशियोन्हि निशींदुराशीट् इति केचि दाहुः - येनेत्थशालोब्दविभुः शशीशवर्षाधिपश्चंद्रभयोन्यथात्वे ॥ ४ ॥

शे रविराशयरव्याक्रांतराशीश्वरो वर्षेश्वरो ज्ञेयः निशि रात्रौ वर्षप्रवेशे इंदुराशीट् चंद्राक्रांतराशीश्वरो व र्षाधीश्वरो ज्ञेय इति केचिदाहुः अथोत्तरार्द्धे विशेषमाह येनेत्थ शाल इति शाल इति युद्युक्तप्रकारेण श शी चंद्रः अब्दविभुः वर्षस्वामी जातः स पंचाधिकारि मध्यस्थेतेन ग्रहेणास इत्थशालं कुरुते तदा स एव वर्षाधिपः वर्षस्वामी कल्प्यः अन्यथात्वे शालयोगाभावे चंद्रभषश्चंद्राक्रांतराशीश्व रो वर्षाधिपो ज्ञातव्य इति ॥ ५ ॥ नीलकंठो विजयते ॥

अथमुथानयनमाह स्वेति यस्य जन्म जातं तस्मिन्समये यल्लग्नं तस्यैव मुथहा सा मुथहा स्वजन्मलग्नात्प्र
तिवर्षं एकैकैराशिबुध्याभ्रमति तद्यथा जन्मलग्नं कन्या जन्मसमये तत्रैव मुथाहा द्वितीयवर्षे तुलाया
मित्यादिर्मुथहोत्पत्तिप्रकार इष्टवर्षे भवति अथमुथहानयनं राश्यादि स्वजन्मलग्नं पातशरयुतं जन्मका
लाद्गतवर्षगणेनयुक्तं द्वादशभिस्तष्टं सा शेषप्रमिता भमुखा राश्यादिरिष्टवर्षेऽथ यिहा मुथहा स्यात् उदाहर
णं जन्मलग्नं ५।१०।५३।५० गतवर्षगणेनयुतं ४४।१०।५३।५० अथराहोर्मुखपृष्ठपुच्छानां लक्षणमाह भो-

स्वजन्मलग्नात्प्रतिवर्षमेकैकराशिभोगान्मुथहाभ्रमेण। स्वजन्मलग्नं रवितष्टजा
तं शरप्लुतं साभं मुखेऽथिहा स्यात् ५ भोग्या राहोर्लवास्तस्य मुखं पृष्ठं गतां लवा ततः
सप्तमभं पुच्छं विमृश्यति फलं वदेत् ॥ ६ ॥

ग्येति यस्मिन्नाशौ राहुरस्ति तेन वक्रगतिना ये भोग्या अंशास्ते मुखसंज्ञाः ये गता लवाः भुक्तलवाः ते पु
च्छसंज्ञाः ततः सप्तमं भवनं ततो राहोः सप्तमं सप्तमराशिः पुच्छसंज्ञक इति विमृश्य विचार्य मुथहा
याः फलं वदेत् ६ अथोक्तप्रकारेण वर्षेशनिर्णयः तत्रादौ जन्मलग्नेशो बुधः वर्षलग्नेशो भौमः मु
थहेशो भृगुः त्रिराशिकेशः सूर्यः दिनेशः शनिः पंचानां मध्ये बलिष्ठः शनिः पूर्णदृष्ट्या लग्नं
पश्यति अतो वर्षपः शनिः ॥६॥ ७॥ इति श्रीदैवाकरदैवज्ञात्मज॰ ज्योतिर्वित्॰ गृहा

ध्यायः सव्याख्योदाहृतिः समाप्तः ॥ अथग्रहाणांस्वरूपं तत्रादौसूर्यस्वरूपमाह सूर्यइतिसूर्य
गताहृष्णोज्ञेयः नृपः क्षत्रियः नापुरुषग्रहः चतुरस्रः चतुष्कोणाकृतिः मध्यंदिनं मध्यान्हकाले
प्रवलः इंद्रदिक्पूर्वदिक्स्वामीस्वर्णसुवर्णद्रव्यस्वामीचतुष्पदामश्वगजादीनांप्रभुः उग्रः क्रू
रः सत्वंसत्वंप्रधानः स्थिरः स्थिरस्वभावः तिक्तः तिक्तरसप्रियः पशुक्षितिः गोभूमिचारीपितप्र

श्रीगर्गान्वयभूषणंगणितविच्चिंतामणिस्तत्सुतोनंतोनंतमतिर्व्यधात्खलमतध्वस्त्यै
जनुः पद्धतिंतत्सूनुः खलुनीलकंठविबुधोविद्वच्छिवानुज्ञयासंतुष्टैव्यरचअहप्रकरणंसंज्ञा
विवेकेमलं ७ सूर्योनृपोनाचतुरस्रमध्यंदिनेंद्रदिक्स्वर्णचतुष्पदोग्रः सत्वंस्थिरस्तिक्तप
शुक्षितिसुपितंजरन्पाटलमूलवन्यः १ वैश्यः शशीस्त्रीजलमूलयंस्त्रीगौरोपराण्हांबु
गधातुसत्वंवायव्यदिक्श्लेष्मभुजगरूप्यस्थूलोयुवाक्षारशुभः सिताभः ॥ २ ॥

कृतिः जरन्वृद्धः पाटलः श्वेतरक्तमिश्रतः। वर्णः मूलंमूलोत्पन्नस्यधान्यादेरधिष्ठातावन्योवनचारी
एवंगुणविशिष्टः सूर्यः १ अथचंद्रस्वरूपमाहशशीचंद्रः वैश्यः वैश्यजातिः स्त्रीस्त्रीग्रहः जलभूसर्द
भूमिचारीनपस्वी गौरवर्णः उपराण्हः कालेप्रवलश्चंबुगोजलचारोधातुर्गैरिकादिः सत्वंसत्वप्रधानः। वा
यव्यादिक्स्वामीश्लेष्माश्लेष्मप्रधानः भुजंगस्वामीरूप्यंरूप्यद्रव्यस्वामीस्थूलोतिपुष्टः युवातरुणः-
क्षारः लवणरसप्रधानः शुभः ग्रहः सिताभः शुभ्रवर्णः एवंविधश्चंद्रः ज्ञेयः २

वंनिधर्म्यवंशोज्ञेयः ३ अथभौमस्वरूपमाह भौमइति एतादृशौभौमोज्ञेयः तमः तमोगुणप्रधानः पित्तपि
त्तप्रकृतिः युवातरुणः उग्रक्रूरः वन्योवनचारीमध्यान्हः मध्यान्हकाले प्रबलः धातुः गैरिकादिःय
मदिग्दक्षिणदिक्स्वामीचतुष्पाच्चतुष्पदानांअश्वादीनांप्रभुः नापुरुषराशिः राट्राजाक्षत्रियः च
तुष्कोणः चतुष्कोणाकृतिः सुवर्णाकारः सुवर्णाकाराणां स्वामीदग्धावज्वलितभूमिचारीव्यंगःकिं

भौमस्तमःपित्तकफोग्रवन्योमध्यान्हधातुर्यमदिक् चतुष्पात् नाराट्चतुष्कोणः
सुवर्णाकारोदग्धांवुनीव्यंगकटुप्रियरक्तः ३ ग्राम्यः शुभोनीलसुवर्णवृत्तः शि
शुविष्टकोज्ञः समधातुजीवः श्मशानयोत्तरदिक्प्रभातंशूद्रः खगः सर्वरसोरजो
ज्ञः ॥ ५ ॥

चित्संगरहितः कटुरसप्रियः रक्तस्ताम्रवर्णः रक्तवर्णद्रव्यस्वामी ३ अथबुध
स्यस्वरूपमाहग्राम्यइतिग्राम्यः ग्रामचारीशुभः सौम्यः नीलः नीलवर्णः सुवर्णः सुवर्णद्रव्यस्वामी
वृत्तोवर्तुलाकृतिः शिशुर्वालकः इष्टकोज्ञइष्टसंचारीसमधातुर्वातपित्तकफात्मकः जीवोम
नुष्यादिः श्मशानंयत्रएवदाहनंभवतिततस्यचारीपोषास्त्रीग्रहः उत्तरदिग् स्वामी प्रभातंप्रात
कालेप्रबलः शूद्रः शूद्रजातिः खगः पक्षजातः सर्वरसः कटुहादिसर्वरसप्रधानः रजोरजोगुणप्रधानः
ज्ञोबुधः एवंगुणविशिष्टोज्ञेयः ५ ॥

ता॰
टी॰
४५
८७

अथगुरुस्वरूपमाह गुरुरितिएताद्दशोगुरुः प्रभातंप्रातःकालेप्रबलः नापुरुषः शुभः सौम्यग्रहः ईशा
दिगीशान्दिक्स्वामीब्राह्मणः पीतः पीतवर्णः द्विपात् द्विपदानांस्वामीग्राम्यः ग्रामचारीसुवृत्तो
वर्तुलाकृतिः जीवोमनुष्यादिः वाणिज्यंवाणिक्कर्मकर्त्ताभाधुर्यंमधुररसप्रियः सुरालयेप्रोदेवता
गृहस्वामीवक्षः वक्षग्रहः सुरत्नं शोभनरत्नस्वामीसमधातुवातपितकफात्मकः सत्वंसत्वगुण

गुरुः प्रभातंनृशुभेशदिकद्विजः पीतोद्विपात्ग्राम्यसुवृत्तजीवः वाणिज्यमाधुर्य
सुरालयेप्रोक्षः सुरत्नंसमधातुसत्वं ५ शुक्रःशुभः स्त्रीजलगोपराह्नः स्वेतः कफी
रूप्यरजोम्लमूलंविप्रोग्निदिङ्मध्यवयारतीशोजलावनीस्निग्धरुचिर्द्विपाच्च ॥

॥ ६ ॥

प्रधानः ५ अथशुक्रस्वरूपमाह शुक्रएताद्दशोज्ञेयः शुभः सुभग्रहः स्त्रीग्रहः जलगोजलचारी
अपराह्णः कालेप्रबलः श्वेतः शुभ्रवर्णः कफीकफप्रकृतिः रूप्यंरूप्यद्रव्यस्वामीरजः रजोगुण
प्रधानः अम्लअम्लरसप्रियः मूलंमूलोत्पन्नस्यधान्यादेः स्वामीविप्रोब्राह्मणः अग्निदिक्अग्ने
यदिकस्वामीमध्यवयाः तरुणः रतीशः क्रीडारसप्रधानः जलावनीजलभूमिचारीस्निग्धरु
चिः श्लक्ष्णकांतिः द्विपात्द्विपदानांमनुष्यादीनांस्वामीदृ

अथ शनिस्वरूपमाह शनिरिति शनिरेतादृशः विहंगः पक्षिजातिः अनिलो वायुचारी दन्यो वनचारी
संध्याकाले प्रबलः शूद्रः शूद्रजातिः अंगनास्त्रीग्रहः धातुसमः वातपित्तकफात्मकः स्थिरः स्थिरस्व
भावः क्रूरः पापग्रहः प्रतीचीपश्चिमादिक्स्वामीतुवरः कसायरसप्रियः अतिवृद्धः अत्यंतवृद्धग्रहः उत्
करभूस्वामीदीर्घाकृतिः सुनीलः सुष्टुवर्णानीलः लोहं लोहस्यस्वामी ७ अथराहुस्वरूपं शनिवत्तत्र किं
चिद्विशेषोस्तीत्याह एनेतिनिषेदजातिश्चांडालविशेषः भुजगः सर्परूपः अस्थियो ऽस्थिस्वामीनैऋर

शनिर्विहंगोनिलवन्यसंध्याशूद्रांगनाधातुसमः स्थिरश्च क्रूरः प्रतीचीतुवरोतिवृद्धो
त्करहितीटदीर्घसुनीललोह ७ राहुस्वरूपं शनिवन्निषादजातिर्भुजंगोस्थिपनैऋरती
ग्रः केतुः सिखीतद्वदनेकरूपः खगस्वरूपात्फलमूह्यपित्यम् ॥ ८ ॥

ऋतिपतिः अथकेतुस्वरूपं शनिराहुवत् परत्वेतावान् विशेषः केतुः शिखी शिखावान् अने
करूपः नानाविधिरूपः इत्थममुनाप्रकारेण ग्रहस्वरूपात्फलं ऊह्यं ज्ञेयं ८ अथदृष्टिमाह तत्रग्रहा
णांचतुर्विधा दृष्टिः एकाप्रत्यक्षस्नेहा द्वितीयागुप्तस्नेहा तृतीयागुप्तवैरा चतुर्थीप्रत्यक्षवैरा तत्रा
दौ स्नेहदृष्टिमाह दृष्टिरितकुंडल्याग्रहः स्वकात्स्थानान्नवपंचमे नवमस्थानेस्थं ग्रहं पंचमस्था
नस्थं ग्रहं पश्यति सादृष्टिर्बलवती प्रत्यक्षतः स्नेहदा प्रीतिदा पादाना

साहष्टिः चतुर्थांशान्यूना पंच चत्वारिंशत्क लात्मका ४५ आखलांनां समस्तानां कार्याणां साधनं सं
पतिं करोति मेलापकाख्या परस्पर प्रीति कारिणी इत्येका हष्टिः अथ स्वाक्रांत स्थानात् ग्रहस्तती
यं स्थानस्थं ग्रहं पत्यश्यति साहष्टिर्गुप्तस्नेह करी कार्यस्य संसिध्दि दा भवति साहष्टिस्ततीय भव
नेत्र्यंशोना चत्वारिंशत्काला ४० कथिता भवे एकादशस्थाने षड्भागः षडंशादशकलात्मिकः

हष्टिः स्यान्नवपंचमे बलवती प्रत्यक्षतः स्नेहदा पादोना खिलकार्यसाधनकरो मेला
पकाख्योच्यते गुप्तस्नेह करीत्ततीय भवने कार्यस्य संसिध्दिदा त्र्यंशोना कथिता त्त
तीय भवने षडभाग हष्टिर्भवेत् हष्टिः पादमिता चतुर्थदशमे गुप्तारिभावास्फुटा
न्योन्यं सप्तमभे तथैव भवने प्रत्यख्य वैराखिला दुष्टं दिक् त्रितयं हुताव्दयमिदं
कार्यस्य विध्वंसदं संग्रमादि कलिं प्रदं हषाद्द्माः स्यर्ध्दादशांशांतरे ॥ १० ॥

हष्टिः स्यात् ॥ ९ ॥ अथ ग्रहाणां शत्रुहष्टि माह हष्टिः पादमतेति स्वाक्रांतस्थानात् ग्रहश्च
तुर्थस्थानस्थं ग्रहं यत्पश्यति साहष्टिर्गुप्तारिभावा उप्रकाशित शत्रुभावा स्फुटा पादमिता च
तुर्थांशमिता पंचदश कलात्मिका हष्टिः तथान्योन्यं परस्परं
सप्तमभे सप्तमराशौ तथैक भवने

ना॰
टी॰
४८

एकराशावपिग्रहोयत्पश्यति साहष्टि प्रत्यहं वैरामखिलासंपूर्णाषष्टिकलात्मेकास्यात् इदं दुष्टं दृक्त्रितयं चतुर्थ दशमरूपेमेकं समसप्तकरूपंद्वितीयनेकराशिगतंतृतीयमेवमिदंदृष्टिवयंद्युताख्यं सकलशुभकर्मनाशकं इदमयि दृष्टित्रयंकार्यस्याभीष्टस्यविध्वंसदं किंच संग्रामादि संग्रामो युद्धं तत्प्रभृतिककलिप्रदं मुख्यकार्यकं क्लेशंप्रददाति इमाद्दृशोवादृशांशांतरे दृष्टदृश्यांतरं पादशभागनधिकं नदायथोक्तफलदाश्च: स्युः १० अथगणितागतदृष्टिसाधनमाह अपास्यतितिथ्य-

अपास्यपश्यंनिजदृश्यखेटादेकादिशेषेध्रुवलिप्तिकास्युः पूर्णांखवेदास्तिथयोद्विवेदाः
खंषष्टिरंभ्रंशांर वेदसंख्या ११ तिथ्यः खचंद्राविपदभ्रतर्काः शेषांकपातेप्यविशेषघाता
त् लब्धंखरामे ३० रधिकोनकेष्ये: स्वर्णंभवेत्प्रस्फुटदृष्टिलिप्ता: ॥१२॥

इतिचयोग्रहः पश्यतिसदृष्टायंपश्यतिसदृश्यइत्यवलोक्यपश्यदृष्टांरग्रहं निजदृश्यखेटात् अपास्यशोध्य वद्राश्यादिशेषतिष्ठतिसितिन्नेकादिशेवात्मके ध्रुवाः स्थिराः लिप्तकाः दृष्टेकलाः पूर्णमित्यादिकाः स्युः तद्यथा दृष्टारहितदृश्यग्रहस्यराशिस्थानेएकस्मिन्शेषेपूर्णाशून्यंदृष्टिः द्विशेषेखवेदाश्चत्वारिंशत् ४० त्रिशेषेतिथयः पंचदश १५ चतुःशेषे द्विवेदाः ४५ पंचचत्वारिंशत् पंचशेषेखंशून्यं षट्शेषेषष्टि ६० सप्तशेषे अभ्रंशून्यं ० अष्टशेषेशरवेदसंख्या पंचचत्वारिंशत् ४५ नवशेषेतिथ्यः पंचदश १५ दशशेषेखचन्द्रा १० ॥ ॥ ॥

एकादश शेषे वियच्छून्यं द्वादशे शेषे शून्य शेषे वाऽ भ्रंतकाषष्टि ६० शेषांशातिदृष्टारांहत इष्टस्य राशि-
स्थाने येंकः प्रांतः सस्थाप्य पाते ष्य योर्गत गम्ययो र्विशेषांतरं कार्यमत द्ययाराशिस्थाने येंकः प्रांतः सपा
तसंज्ञकः तस्याग्रिमांकोपः स एष्यसंज्ञकः तयोरंतरं कार्यं तेनांतरेण शेषांशाः गुण्याः ततः खरामैः त्रिंश
द्भिः ३० भक्ते लब्धं कलादिकं तत् ध्रुवे राशिस्थाने प्राप्तांके स्वर्णं कार्यं कदा चाधिः कोनके ष्ये सति यदाग्रि
मो ध्रुवः प्राग्ध्रुवाऽधिको भवेत् तदा धनं यदोनोऽग्रिमध्रुवस्तदा ऋणं एवं संतिताः स्फुटाः दृष्टिलिप्ताः कलां

पश्यन्मित्रदृशा सुहृद्धिपुदृशा शत्रुः समस्त्वन्यथा तिथ्य काष्ट नगांक शैलखचराः १५।२३।
७।७।८।७।८ सूर्यादिदीप्तांशकाः चक्रे वामदृगुच्यते बलवती मध्या द्यथावरमनीत्येक
दैपि दृगुच्यतेऽर्धजननीत्येके विदुः सूरयः २३॥ स्युः उदाहरणं दृष्टाचंद्रः ५।२२।९।४७ द्रष्टो
रविः ८।७।३०।६ दृष्टारहितदृश्यः २३।१५।२०।१९ अस्य राशिस्या राशिस्थाने त्रयोंकाः त्रयाणामध्याऽ पंचद

| दृष्टिध्रुवांकाः सीतराः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| राशि | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ १२ |
| ध्रुवा | ० | ४० | १५ | ४५ | ० | ६० | ० | ४८ | १५ | १० | ० ६० |
| अंत | ४० | २५ | ३० | ४५ | ६० | ६० | ४५ | २५ | ५ | १० | ६० ६० |
| | ध | ऋ | ध | ऋ | ऋ | ऋ | ध | ऋ | ऋ | ध | ऋ· |

श ध्रुवांक प्राप्तः १५ अग्रमीकः पंचचत्वारिंशत् ४५
अनयोरंतरेण ३० शेषांकाः २०।१९ गुणिता जाताः
४६०।३० त्रिंशत् भक्ताः लब्धं १५।२० इदमग्रिम-
स्यांकस्याधिकत्वान्यंचदश १५ मध्ये युतं जातास्तयो
परिचंद्रस्य कलात्मिका दृष्टिः ३०।२० एवं सर्वग्रहाणां।

ता॰
टी॰
५०

| ग्रहदृष्टिपत्रं | | | | | | | |
|---|---|---|---|---|---|---|---|
| | र | चं | मं | बु | बृ | शु | श |
| र | ० ० | ३० ३० | १४ ५ | ९ ३३ | ४४ १० | ४ ११ | १५ ४० |
| चं॰ | ३० ३० | ० ० | २१ २३ | २२ १४ | २२ ३५ | ३८ २ | ३० ४४ |
| मं॰ | १४ ५ | १३ ४४ | ० ० | ५५ २७ | १९ ५४ | १९ ५८ | १९ २७ |
| बु॰ | ९ ३३ | १३ २४ | २५ २५ | ० ० | २५ ३५ | ३४ ३८ | १० ५४ |
| बृ॰ | ४४ १० | २२ २४ | २९ ५८ | ५२ ३५ | ० ० | १ ४० | १४ ४० |
| शु॰ | २७ १३ | १० २४ | ३३ ३३ | २४ ४४ | ४ ४४ | ० ० | ५ ५० |
| श॰ | १५ ४१ | ३० ४१ | १९ ५८ | २१ १ | २१ १ | २६ ५६ | ० ० |

मपि ज्ञेयं १२ अथ ग्रह मैत्री चक्र माह पश्यन्निति योग्रहोयं ग्रहं मित्रदृशा मित्र
दृष्ट्या नव पंचतृतीयैक: दशदृष्ट्या पश्यति सग्रहस्तंप्रति सुहृन्मित्रंज्ञेय: योग्र
होयंग्रहंमित्रदृशा शत्रुदृष्ट्या चतुर्थदशमैक सप्तमदृष्ट्या पश्यतिसतंप्रतिश
त्रुर्ज्ञेय: अन्यथा मित्र शत्रुदृष्ट भावे परिशेषाद्वितीयषष्टाष्टमद्वादशस्थाने
षुसमताभवति अन्नार्थेसंमतिवाक्यं तथा चरोमक: मित्रं तृतीयपंचमनव
मैकादशगतोऽपियो यस्य धनमृतिरिपुरिफेषुच समोग्रहस्यादिति ज्ञेयं १
शत्रुस्तथैकं तुर्येजायास्थाने तथादशमे ताजकहिल्लाजमते नैतादृक्कथि
तमस्माभि: अत्र मित्रसमविचारेण वंम पंचमादिस्थाने दृष्टिरेव ग्रस्ता अत्र
सर्वेष्वपिस्थानेषु यद्यपिगणितागतिदृष्टौरायाति तथापिसान ग्राह्याकु
त: दृष्टभावेनसमतोक्तागणितागतदृष्टौसत्यां समताया अभावस्यादिति
हेतुरिति केचित् वस्तुतस्तु अत्रग्रहयोरेकं पंचमसप्तैकादशगतरयोस्कल्प
भागाद्यवयवयोर्गणितागतदृष्टेरभाव: यथा दृष्टा चन्द्र: १।३।२०।५० दृष्यो बुध: २।३।२०।५० वा बुध:
६।३।२०।५० वा बुध: ८।३।२०।५० एवं कदाचित् ०।३।२०।५० एवं कदाचित्संभवतीति ग्रंथांतरे समानोक्ता
अथ सूर्यादीनां दीप्तांशानाह तिथीति सूर्यस्यतिथय: पंचदश १५ चंद्रस्यार्का: द्वादश: १२ भौमस्याष्टौ ८ बुधस्यन
गा: सप्त: गुरोरंका नव ९ शुक्रस्य शैला: सप्त: ७ शने: खचरानव: ९ सूर्यादीनां ग्रहाणामेते दीप्तांशका: ज्ञेया:

अथ दृष्टौ कश्चिद्विशेष उच्यते चक्र इति चक्रे लग्नादि द्वादश राशिचक्रे वामक बलवती ज्ञेया दक्षिणा दृष्टिरपापेक्षये
त्यर्थः वामस्य वामस्थानस्थस्य ग्रहस्य दृक् वामदृक् वाममार्गस्थ ग्रहस्य दक्षिणभागस्थ ग्रहोपरि या दृष्टिः सा बलव
ती लग्नादि षष्ठांतं दक्षिणविभागः सप्तमादि द्वादशांतं वामविभागः तदुक्तं वृहज्जातके कंटकमित्यादि श्लोके वामु
दितेरिति राशिभिरुदितैर्दृश्यभागावस्थितैर्वामांगविभागः लग्नस्योदितभागास्तथा द्वादशैकादशदशमनवमा
ष्टमाः सप्तमस्य राशेः लग्नानुदित तुल्यभागाः एष उदितो विभागः अयमेव वामविभागः शेषोऽनुदितः अ
र्थादनुदितैरदृश्यैः दक्षिणो विभागः तत्र लग्नानुदितभागाः द्वितीय तृतीय चतुर्थ पंचम षष्ठाः सप्तमराशे
र्लग्नोदिततुल्य विभाग इत्यनुदितो विभागः एव दक्षिणो विभागः इति भट्टोत्पलः चक्रे वामदृ उच्यते व
लबलवतीत्यत्र केचिदेकमुसाहरण माहमध्यादिति मध्याद्दशमाहे भ्रमनि चतुर्थस्थाने या दृष्टिः सा बलवती
त्युक्तं भवति दशमस्थानस्थित ग्रहस्य चतुर्थस्थानस्थित ग्रहोपरि या दृष्टिः सा बलवतीत्यर्थः चतुर्थस्थान
स्थित ग्रहस्य दशमस्थानस्थ ग्रहोपरि या दृष्टिः सा निर्बलेत्यर्थत्वात् सूचितं सप्तमादि द्वादशांतस्थानस्थि
तानां ग्रहाणां लग्नादि षष्ठांतस्थानस्थितेषु ग्रहेषु या दृष्टिः सा बल वतीति निर्दिष्टार्थः समरसिंहस्याप्यय
मेवोर्थ तद्यथा चक्रस्य वामदृष्टेर्दक्षिणा दृष्टिर्बलीयसी ज्ञेया भूकेंद्रोपरि दृष्टिर्मध्यात् सबलेति सर्वतोप्यूह्यमि
ति वामदृष्टिरित्यत्र सप्तमी तत्पुरुषः समासः वामे दृष्टिर्वामदृष्टिः दक्षिणे दृष्टिः दक्षिणे दृष्टिः दक्षिणभाग
स्थितानां ग्रहाणां या वामभागस्थ ग्रहेषु दृष्टि वामभागस्थ ग्रहाणां दक्षिणभागस्थ ग्रहोपरि या दृष्टिः साब
लतीत्यर्थः अत्रारादर्शाभूकेंद्रेति मध्यासमस्थानाद्दकेंद्रोपपरि चतुर्थोपरि या दृष्टिः सा बलवती एवं सर्वतो

नास्यतानां लग्नादिषष्ठांतस्थानस्थितेषु ग्रहेषु या दृष्टिः सा बलवती न्यूह्यं विचार्यं श्रीकेशवदैवज्ञस्या-
प्ययमेवार्थः न च यथा परार्द्धं खगदृक् प्राग्जार्द्धदृक् अधिकेति परार्द्धं खगस्य दृक् लग्नादिषष्ठांतं पूर्वार्द्धं सस
प्तमादि द्वादशांतमपरार्द्धमिति अथैकस्थानदृष्टिमतांतरमाह एकर्क्षेपीति एकर्क्षे एकराशिस्थितयो ग्रहयो र्द्र
ष्टाः परस्परं या दृग्दृष्टिः सा अर्थजननी अर्थ्यं अर्थजननी अत्यंतलाभपूर्वकशुभदा ज्ञेया इत्येके सूरयः पं
डिताः ताजिकशास्त्रवेत्तारो विदुः २३ अथ पूर्वोक्तानां दीप्तांशानां प्रयोजनमाह पुर इति अनवमादिस्थानदृष्टेः स
त्यां ग्रहो दृष्टा स्वदीप्तांशैः कृत्वा पुरोऽग्रे पृष्ठे पश्चाद्वाऽवस्थिते ग्रहे विशिष्टमुत्कृष्टं नवम्यादिस्थानस्थं दृक्

पुरः पृष्ठे स्वदीप्तांशैर्विशिष्टं दृग्फलं ग्रहः ॥ दद्यादतिक्रमे तेषां मध्यमं दृक्फलं विदुः ॥ २४ ॥ प्रागिक्क
वालोपरइन्दुवारस्तथैत्थशालोपरईसराफः ॥ नक्तं ततः स्याद्यमया मणऊं कंबूलतो गैरिकं
बूलमुक्तं ॥ २५ ॥ खल्लासरं रद्दमथो दुफालिकुत्थं च दुत्थोत्थदिवीरनामा ॥ तंवीरकुत्थो दुरफा
श्च योगाः स्युः षोडशैषां कथयामि लक्ष्म ॥ २६ ॥ फलं दृष्टिफलं दद्यात् तेषां दीप्तांशानामति क्रमे दृष्टि
फलं मध्यमं साधारणं दद्यादिति विदुः २४ अथ षोडश योगा व्याख्यायते तत्र तेषां नामानि श्लोकद्वयेनाह
प्रागिति खल्लेति च प्राक् प्रथमो योगः इक्कबालः १ अपरः इंदुवारः २ तथेत्थशालः ३ अपरः ईसराफः ४
ततो नक्तं स्यात् ५ यमया ६ मणऊं ७ कंबूलं ८ गैरकंबूलं ९ खल्लासरं १० रद्दं ११ अथो दुफालकुत्थं १२ दुत्थो
त्थदिवीरं १३ तंबीरं १४ कुत्थः १५ दुरफः १६ एते षोडश योगाः स्युः एषामिक्कबालादीनां लक्ष्म लक्षणं क

अथैकवालेंदुवारयोर्द्वयोर्लक्षणमाहचेदिति लग्नचतुर्थसप्तमदशमस्थानानां कंटकसंज्ञाउक्ताकथिता
कंटकचतुष्टयंकेंद्रइतिपर्यायाः तदनंतरं द्वितीयपंचमाष्टमैकादशानांस्थानानांपणफरसंज्ञाउक्ताकथि
तातदनंतरंतृतीयषष्ठनवमद्वादशस्थानानामापोक्लिमसंज्ञाउक्ताचेत्समस्ताः सर्वेग्रहाः केंद्रपणफरेष्वस्थुः
तदासइक्कवालाख्योयोगः स्यात्सइक्कवालयोगोराज्यसुखयोराप्तिर्लब्धिस्तस्याः हेतुः अत्यंतशुभफलदइ
त्यर्थः आपोक्लिमेयदिसर्वेखगाः ग्रहाः स्युस्तदेंदुवारनामकस्ताजिकशास्त्रेगीतः कथितोयोगः स्यात्

चेत्कंटकेपणफरेचखगाः समस्ताः स्यादिक्कवालइतिराज्यसुखाप्तिहेतुः आपोक्लिमेयदि
खगाः सकलेंदुवारोनस्यात्शुभः क्वचनताजिकशास्त्रगीतः ९७ शीघ्रोल्पभागैर्घनभा
गमंदग्रस्थेनिजंतेजउपाददीतस्यादित्यशलोयमथोविलिप्तांलिप्तार्द्धहीनोयदिपूर्णे
मेतत् ॥ ९८ ॥

किलइतिनिश्चयेनसंयोगः क्वचनकुत्रापिवर्षमासप्रवेशादौशुभोनस्यात् ९७ अ
थमुथशिलयोगस्यलक्षणमाह शीघ्रइतीययोर्द्वयोर्ग्रहयोर्मुथशिलविचारः क्रियते तयोर्मध्येयस्यात्
धिकाइतिगतिः सशीघ्रगतिर्ग्रहः द्वितीय तृतीयमंदगतिग्रहः अल्पभागैः स्वल्पांशैरुपलक्षितोभव
नघनाः बहवः भागाः अंशाः यस्यासाघनभागमाः तादृशेवक्रेशेमंदे मंदगतिग्रहे अग्रेसति एतदुक्तं
भवति शीघ्रगतिग्रहस्यभागापेक्षयामंदगतियस्याधिकभागाभवंति तदाशीघ्रगतिर्ग्रहः निजस्वीयंतेजः

सामर्थ्यं मतिगत ग्रहाय उपाददीतदद्याति स्वयं इत्थ शालाख्यो योग: स्यात् अस्यैव वान्नतरं मुथाशिल मिति शीघ्र गतिग्रहात् शीघ्रगति दीप्तांशांतर्गतांतरमार्गेरविकें मंदे मुथु शिलपिश इति पर्यवसितोर्थः अथ पूर्ण मुथाशिलयोगमाह यद शीघ्रगतिग्रहः मंदगतिग्रहात् विलिप्ताएकविकलामात्र्यूनोपवालिनार्द्ध हीन: त्रिंशद्विकलान्यूनोपि भवेत्तदा एतत्मुथशिलं पूर्णं विंशंति विंशोपकात्मकं जातस्यात् पश्चाद्योर्विकलांता वयवेन तुल्यताभव

शीघ्रोयदाभांत्यलवस्थित: सन् मंदेन्यभस्थो निदधाति तेजः स्या

दित्य शालोयमथेपशीघ्रदीप्तांशकांशैरिह मंद एष्टे १९ तदाभ

विष्यजरण नाय मित्य शाल त्रिधैवं मुथशील माह: ॥ ॥

ति तदा पूर्णं मुथशिल मित्यर्थत: सिद्धं १९ अथ अदृष्टो मुथशिललक्षण माह शीघ्र इतिनेदति यन्नार्द्धे नन्व यदा शीघ्र: शीघ्रगतिग्रहः भांत्यलवस्थित: राशेरंति मांशेत्रिंशतमें शेस्थिा: सन् मंदे मंदगतिग्रहे ऽन्यभस्थे अग्रिमिराशौ सति शीघ्रग्रहस्य सप्तांशावधितदा शीघ्रगतिर्ग्रहः मंदागति ग्रहयतेजोनिदधात अथगित्य शालयोगःस्यात् अथ भविष्यमुथशिलयोग उच्यते अथेति एषशीघ्रगतिग्रहः स्वदीप्तांशेत्यंधिकांशै: क्रतागंदगितिग्रहात् ए शेस्थित: सन मंदगति ग्रह यदामिजं

ता॰ नेजः दातु कामोभवति तदा इत्थ शालं मुथशिलयोगो भवेष्यत् अग्रेभविष्यत् अग्रे भविष्यतीति गणनीयंज्ञेयं
टी॰ एवं विधात्रिप्रकारकं मुथशिलमाह अथमुथशिलयोगानां फलमाह लग्नेशाति लग्नस्वामी यद्भावस्यप्रश्न
५५ क्रियते तद्भाव स्वामी कार्याधिपः अनयोर्यथा मुथशिलयोगः तथा संतः अतिशिष्टाः कार्य मुशंति तद्यथा केन
८० चिदागत्य प्रश्न कृतः मम पुत्र स्त्री राज्य लाभादि सुखं भविष्यति नवेति तत्र लग्न स्वामी प्रश्न कर्ता ज्ञेयः तत्तद्भा
वाधीशश्च कार्य स्वामी तत्र पुत्रप्राप्तिचिंता पंचमस्य भावात् स्त्रीप्राप्तिचिंता सप्तमंभावात् राज्यप्राप्तिचिंता दश

लग्नेशकार्याधिपयोर्यथैवयोगस्तथाकार्यमुशंति संतः २० लग्नेशका
र्याधिपतत्सहायायत्रस्युरस्मिन् पतिसौम्यदृष्टेतदावलाढ्यंकथयं
तियोगं विशेषतः स्नेहदृशपि संतः ॥ २१ ॥

मभावात् लाभचिंता एकादशभावात् एवं सर्वत्र ज्ञेयं तत्र लग्नेशस्य राजाद्यभीष्टकार्यभावेसस्यच मुथशिलयो
गो यथाभवति तथा तद्भाव प्राप्तिर्वक्तव्या तयो वर्तमानो मुथशिल योगश्चेत्तदा तद्भाव सुखं इदानीं वर्तत इति वा
च्यं यदि तयोः पूर्णमुथशिल योगस्तदा संपूर्णं तद्भाव संबंधिसुखं वाच्यं यदि तयोः भविष्यन्मुथशिल यो
गः तदा तद्भाव सौख्यं अग्रेभविष्यतीति वाच्यं २१॥ २०॥ अथदृष्टिविचारमाह। लग्नेशेति लग्नेशः ॥ ५५

लग्नस्वामी कार्याधिपः कार्यस्वामीच तत्सहायोनाम लग्नेशो निष्टकार्यः मित्रंच एतंचत्वारोयत्र यस्मिन् राशौस्युः भवंति अस्मिन् राशौपतिः स्वामीसौम्यः शुभग्रहः जाम्यांदृष्टेसति नराःप्रागु त्पन्नं मुथशिलयोगंवलाढ्यं उत्कृष्टफलदं कथयंति तत्रापि संतः अतिशिष्टाः स्नेह दृशा स्नेहदृ ष्ट्या विशेषतः सवलमिति आहुः २१ अथान्यमपिफलविचारमाह स्वर्द्धीति लग्नाधिपः कार्या

स्वर्द्धीदिसत्स्थानगतः शुभैश्चेद्युतेक्षितेक्षितोऽभूद्भविताथवा
स्ते नराःशुभं प्रागभवत्सुपूर्णमग्रेभविष्यत्यथवर्ततेच॥
॥२२॥

धीशाश्च स्वर्द्धीदिषु स्वगृहस्वोच्च स्वहद्दास्वद्रेष्काणे पलमुसल्लहेषु अथ वा सत्स्थानेषु शुभग्रहस्थानेषुगतोविद्यमानः सन् शुभैः शुभग्रहैः फतेक्षित् श्चेद्भूत् नराःप्रा क्पूर्वं शुभंशुभफलंसंपूर्णं भवत्जातमिति वक्तव्यं यदालग्नपकार्याधीशौस्वर्द्धादि सत्स्थानगौ शुभैर्युतेक्षितौ चेद्भवितारौ नराःशुभफलमग्रेभविष्यति तीवाच्यंमपराल्वग्रयकार्याधीशौस्वर्द्धी दिसत्स्थानगौशुभग्रहर्युतेक्षितौ चेद्भवतः नराःशुभफल मिदानीं वर्तते एवेति वक्तव्यं२२ ५६

अथाह शुभफलमाह व्यत्यस्तमिति अस्मान्वर्णादि सत्स्थानगत इति पूर्वोक्तादर्थाद्विपरीतभावे दुष्टस्थाने सति व्यस्तत्वं अन्यथाज्ञेयं तद्यथाज्ञेयं तद्यथा सलग्नाधीशः कार्याधीशो वा स्वशत्रुक्षत्रगतः स्वनीचग्रहगतो वा सुशत्रुगृहद्वादि व्यशुभेषु पापग्रहस्थानेषु वागतः सन् पापग्रहैर्युतो दृष्टो वा चेद्भूतं तदा प्राक्सर्वमेवाशुभमभवत् यदा लग्नाधीशः कार्याधीशो वा दुष्टस्थानगतः सन् पापग्रहैर्युतो दृष्टो वा चेत्तदास्तेन इदानीं अनिष्टं वर्त्तते एवेति वाच्यं अथ तृतीयमुथशिलयोगे फलविशेषविचारमाह यथेति यदा लग्नेशः कार्येशो वा इ




व्यत्यस्तमस्माद्विपरीतभावे येष्टर्क्षतो निष्टग्रहं प्रपन्नः अभूच्छुभं प्राग
सुभं त्विदानीं संयातु कामेन च भावि वाच्यं २३ शीघ्रोयदा मंदगतेरथैकम
प्यंशमध्येति तदा सराफः कार्यहृलयोर्मूसरिफे खलोत्थ्ये सौम्येन हि ल्ला
जमतेन चिंत्यम् ॥ २४ ॥ ष्टर्क्षगतः मित्रराशेः सकाशादनिष्टग्रहं शत्रु
ग्रहं प्रपन्नस्तदा प्राक् सर्वं शुभं शुभफलं अभूज्जातमिति वक्तव्य इदानीमशुभं फलं वर्त्तत इति वाच्यं स
पातुकामेन तद्यथा लग्नाधीशः कार्याधीशो वा मित्रग्रहे वर्त्तते अथ शत्रुग्रहं प्रति आयास्यति तदा अ
शुभं फलं भाववाच्यमग्रे भविष्यति इति वाच्यं २३ अथ सराफयोगस्य लक्षणमाह शीघ्र इति यदीमं
दगतिग्रहस्यैकमप्यंशं शीघ्रं शीघ्रगाते ग्रहो भ्यत्ति अतिक्रमात् अग्रे गच्छति तदा इसराफः इसराफाख्यो यो
गः स्यात् अपरः पर्यायो मूसराफाख्य इति खलोत्थ्ये शीघ्रे गतिर्नदगतिग्रहयोः पापयोः ।ऽऽ

संबंधेन जाते मुसरिफे योगे सति कार्यं तयोर्वांछित कविनाशः स्यात् तस्मिन्नीसराफ योगे सौम्ये शुभग्रहोत्पन्ने का र्यं तयो न नास्ति इदं फलं हिल्लाजमतेन चिंत्यज्ञेयं २४ अथ नक्तयोगस्य लक्षण माह लग्नेशाति लग्नेश लग्न स्वामी कार्याधिपः कार्यस्वामी अनयोर्मिथः परस्परं दृष्टिर्न नास्ति चेत् अथ तन्मध्यगतोपि शीघ्रः यदि तयोर्ल ग्नाधीश कार्याधीशयोर्मध्ये यं कश्चिच्छीघ्रग्रहो भवति तादृशो मध्यवर्ती पृष्टसंस्थाच्छीघ्रग्रहात् तेजः आ दायगृहीत्वा ऽन्यत्रान्यस्मिन् मंदगतिः ग्रहेन्यसेत् अर्पयति तन्नक्तं नक्तनामयोगः स्यात् अथास्य नक्तयोग

लग्नेश कार्याधिपयोर्न दृष्टिर्मिथो यदि तन्मध्यगतोपि शीघ्रः आदायतेजो यदि पृष्ठसंस्थाद्न्यसे दधान्यत्र हि नक्तमेतत् २५ स्त्रीलाभपृच्छा तनुरस्तु कन्या स्वामी बुधः सिंहगतो दशांशैः सू र्यांशकैः देवगुरुः कलत्रे दृष्टिर्हि नास्ति मिथो थ चंद्र २६ चापे वृष्टे चापे महष्य मूर्तिः शीघ्रो ष्टभागवांशैः आदायतेजो बुधतो ददौ यज्जीवाप लाभपरतः स्त्रियाः स्यात् २७॥




स्योदाहरणं माह स्त्री लाभेति चाप इति चक्रे नक्तिन्त्रष्टा यस्मिन्समये आगत्य पृच्छा प्रश्नः कृतः मम स्त्री प्राप्तिर्भवि ष्यति नवेति तस्मिन्समये तनुर्लग्नं कन्यास्ति तस्य स्वामी बुधः सिंहग तः सिंहराशौ दशस्थानेदशांशैर्दशभिरंशैः परिमितो दृष्टः तथा देवगु रुः बृहस्पतिः सूर्यांशके द्वादशभिरंशैरुपलक्षितः कलत्रे सप्तमस्थानस्ति तयोर्बुधजीवयोः

मिथः परस्परं षडष्ट स्थानस्थितत्वाद्दृष्टिर्नास्त्येव अथ चंद्रः शीघ्रः शीघ्रगतिर्ग्रहः उभयोर्बुधजीवयोर्मध्यगतः सन्वायेधनुषि अथवा वृषभराशौ अस्ति कीदृशः उभयदृश्य मूर्ति स्वरूपं यस्य बुधजीव दृष्टपुनः कीदृशः अष्टभागे अथवा भवांशे एकादशभिरंशैरुपलक्षितः एतादृशश्चंद्रः बुधतः तेजः सामर्थ्यं आदाय गृहीत्वा जीवाय गुरवे पदद्यै ददातिस्म तस्माल्लग्नस्वामीनो बुधस्य तेजोयहारात्स्वप्रयत्नेन स्वित्रिप्राप्तिर्भवतीति वक्तव्यं कुतः तृतीयेन मध्यस्थ चंद्रेण तेजोयहारात्तस्मात्तस्मातृतीयमध्यस्थप्रयत्नेन स्वित्रियाः प्राप्तिर्वक्तव्या

अंतः स्थितो मंदगतिस्तु पश्येद्दीप्तांशकै र्दानयशीघ्रतस्तु नीत्वा
भहोयच्छति मंदगाय कार्यस्य सिद्ध्यै यमयाप्रदिष्टः २८॥

नक्तयोगोयं २६। २७ अथयम योगलक्षण माह अंतः स्थित इति यौ लग्नाधीशकार्याधीशौ परस्परं नपश्यतः अनयोर्लग्नाधीशकार्याधीशयोरंतः स्थितो मध्ये वर्तमानो मंदगतिर्ग्रहः स्वदीप्तांशैः कृत्वा यौ लग्नाधीशकार्याधीशौ स्थानदृष्ट्यापश्येत् अथ स मंदगामीग्रहः शीघ्रतः लग्नाधीशकार्याधीशयोर्मध्ययः शीघ्रगतिग्रहः तस्मान्महस्तेजो नीत्वा गृहीत्वा मंदगाय मंदगतिः ग्रहावयच्छिशतिलग्नपकार्यपयोर्मध्येयो मंदगतिग्रहः तस्मै यच्छति ददातिसयमयाख्योयोगः वांच्छित कार्यस्य सिद्ध्यै प्रदिष्टः कथितः २८ 

ता॰
टी॰
६०
५

अथास्य यमयायोगस्योदाहरणमाह राज्येति दिगंशाक इति च मम राज्यस्य प्राप्तिर्भविष्यति न वेति वांछ्
यां प्रश्ने लग्नं तुला तस्य नाथः स्वामी सितः शुक्रः मेषे सप्तमस्थाने गतोऽष्टलवैरुपलक्षितोस्ति तथा रा
ज्यनाथः राज्यभवनं दशमं तस्य नाथः स्वामी चंद्रः रसांशैः षडंशैरुपलक्षितः सन् वृषस्थोऽष्टमस्थानगतो भ
वति तयोर्लग्नाधीश राज्यनाथयोः परस्परं द्विर्द्वादशस्थानस्थितत्वात् दृष्टिर्नास्त्येव गुरुः बृहस्पतिर्मंदो मंद
गतिर्ग्रहः दिगंशकौ दशभिरंशैः परिमितः कर्कगतः कर्कस्थितो दशमस्थानस्थितः सन् उभौ लग्नाधीशकार्या

राज्यातिपच्छ्रा तुलालग्नं नाथो मेषे सितस्त्वष्टलवैर्वृषस्थः चंद्रो रसांशैर्यदि राज्यनाथो
दृष्टिस्तयोर्नास्ति गुरुस्तु मंदः २९ दिगंशकः कर्कगतस्तु पश्यन्नुभौ महोदीप्तलवैः स्वांद्वः
दद्यौ सितायेति यदस्य लाभो मात्येन भावीति विमृश्य वाच्यम् ॥ ३० ॥

| यमयायोगोन्य | | |
|---|---|---|
| ८ | ६ | |
| ९ | ७ | ५ |
| १० | | ४ वृ॰ १० |
| ११ | १ शु॰ ८ | ३ |
| १२ | | २ चं॰ ६ |

दीप्तांशान् दृष्ट्या पश्यन् उभाभ्यां चंद्र शुक्राभ्यां अधिकैः स्वदीप्तांशैः कृत्वास
चंद्र चंद्र संबंधिमहः तेजो गृहीत्वा सिताय शुक्राय ददौ ददाति अतः कारणात् प्रष्टस्य
स्थानस्य राज्यलाभोऽमात्येन मंत्रिणा भावि भविष्यतीति इति विमृश्य विचार्य वाच्यमेव
तदयं यमयायोगोयं २९ ३० अथ मणऊयोगलक्षणमाह वक्र इति तेजो हरेदिति च अ-
स्मिन् मणऊयोगे लग्नाधीश कार्याधीशयोः परस्परं स्थानदृष्टिरपेक्षिता यदि शीघ्र
वेगात् लग्नाधीश कार्याधीशयोर्मध्ये यः शीघ्रखेटः शीघ्रगतिग्रहो दीप्तांशादिस्तस्मात्पश्चात् पूर्वं पुरः अग्रे चांदे वव

ता॰
टी॰
६१
५

क्षोभौमे: शनिर्वातिष्ठति ताहशो ग्रहेन: शनिर्वातुर्यदृष्ट्या चतुर्थस्थानदृष्ट्या वैकदशसप्तभुवा उ अथवा एका
राशिजातया दृष्ट्या तथा सप्तमस्थानजातया दृष्ट्या वा चेदंशैरधिकोनकैः तथा शीघ्रसदृस्यभागपेक्षया
धिकैरूनकैर्वांशैः शीघ्रगतिग्रहस्य दीप्तांशामध्यवर्तीभिः पश्यन् सन् शीघ्रगतिग्रहस्य तेजो हरेत् कीदृशः का
र्यपदेत्यशालीस्थितः कार्यः पदं वांछितकार्यस्य स्थानं तथा तत्कार्यस्थानाधीशेन सह मुथशिलकारी संस्थि
तोपि वर्तमानश्चेद्भवति तदा सोमणऊनामयोगः स्यात् शुभोन कार्यः कर्ता च भवेदित्यर्थः अथोदाहरणं

वक्रः शनिर्वायदि शीघ्रखेटात्पश्चात्पुरस्तिष्ठति तुर्यदृष्ट्या एकदशसप्तदभवा दृशा वाप
श्यन्नथांशैरधिकोनकैश्चेत् ११ तेजोहरेत्कार्ययदेत्यशालीस्थितोपि वा सोमणऊ शुभो
नः स्त्रीलाभपृच्छानु राशि कन्या ज्ञोदिग्लवैस्तिथिभिः सुरेज्यः ॥३३॥

स्त्रीलाभेति कलत्रगः इति च सम स्त्रीप्राप्तिर्भविष्यति न वेति पृच्छायां प्रश्नेतनुर्लग्नं कन्यास्ति तस्य स्वामी
ज्ञो बुधः अत्र कन्यायां दिगैरंशैर्दशभिरंशैरुपलक्षितोस्ति तया सुरेज्यो गुरुः तिथिभिः पंचदशभागै
रुपलक्षितः सन् कलत्रगः कलत्रं स्त्रीः भवनस्तत्र गच्छतीति सप्तमस्थानोस्तीत्यर्थः तथा
अवनिजो भौमः खेदशस्थाने भवांशैरेकादश

६१

मिरश्मैरुपलक्षितोऽस्ति अग्रे भौमस्तूर्यदृष्ट्या बुधं पश्यति तस्मात् बुधात् एकांशनाधिको भूत्वाग्रस्थितोजात स्ततोग्रेगत्वा भौमेनहृतं स्वतेजोयस्य। तादृश: तेजोरहितो बुध: पूर्वप्रथमत: कृत: अस्मादानंतरं जीवेन कार्याधीशेन सहशीघ्रगतित्वान्मिलति इतिहेति: नार्या: जाया: यालाभ: प्राप्तिर्नोनास्तीति वक्तव्यं अयमेकोयोग: अथापर: अथवा यथावस्थिते पूर्वस्मिन्योगे बुधापेक्षयाभौम: स्वल्पांशैरवस्थित: सन् दृष्टोभवति एवमस्मिन् भौमे दृष्टगते सति असौ मणऊयोग: कार्यनाशको भवति मणऊपोगोयं ३१।३२।

कलत्रग: स्वेवनिजोभवांशे: पूर्वैर्बुधो भौमहृत: स्वतेजा: जीवेनपश्चा न्मिलतीति लाभोनार्यास्तुनो दृष्टगते यवास्मिन् ३३ यदीत्थशालोस्त्मु भयो: स्वदीप्तहीनांधिकांशे: शनिर्भूसुतोचेत् एकर्क्षगौ लग्नपकाय योस्तत्तेजो हरौ कार्य हरौनिरुक्तौ ३४।।

।३३ अथमणउयोगभेदमाह यदीत्थशाल इ तियदि उभयोर्लग्नेश कार्येशयो: इत्थशालो मुथशिलयोगो भवति वच्छनिभूसतौ एकर्क्षगौ लग्नाधी शकार्याधीशौ योमध्येकेनचित्सह एकराशिगतोस्त: स्वदीप्तहीनाधिकांशे: स्वशब्देन लग्नाधीशका र्याधीशौ तयोये दीप्तांशकास्तदपेक्षयान्यूनैरधिकैर्वादीप्तांशमध्येवर्तिभि: शनिभौमयोरंशै: कृत्वा लग्न पकार्यपयो: लग्नाधीशकार्याधीशयोस्तेजहरौ संतौ कार्यहरौ कार्यनाशकौ निरुक्तौ ।। ३४ ।। ३४ ।। ३४।।

मणौ योगो यामूपराऊ योगोयं ।।

अथोदाहरणं राज्याप्तिप्रश्ने कंति मम राज्यप्राप्तिर्भविष्यति नवेति प्र
च्छायां प्रश्ने तुलालग्नं तस्य नाथः स्वामी सितः शुक्रः कर्के तिथिभिः
पंचदशांशैरुपलक्षितो भवति राज्यभवनाधीशः शशी चंद्रः वृषे दिगं
शैर्दशांशैरुपलक्षितोस्ति कुजो वृषस्थः सन् भूपलवैः षोडशांशै
रुपलक्षितोस्ति चकारात् छनिरपि वृषस्थः सन् भूपलवैः १६ उपलक्षि

राज्याप्तिप्रच्छा तुललग्ननाथः कर्के सितोंशैस्तिथिभिर्दिगंशैः वृषेशशिभूपलवैः कु
जश्च हरन् द्वयोर्भौ हरते च राज्यं ३५ लग्नकार्येशयोरित्थशालेन्नैं पित्थशालतः कं
बूलं श्रेष्ठमध्यादिभेदैर्नानाविधः स्मृतम् ३६ ।।

तोस्तीति ज्ञातव्यं भौमो द्वयोर्लग्नाधीशयो
रित्थशाले परस्परमुथसिलयोगे सति भांते जो हरन् राज्यं हरति पुनर्मणऊ योगोयं ३५ अथानेकप्रकार
भिन्नं कंबूलयोगमाह लग्नकार्येशयोरित्थेति अत्र लग्नाधीशकार्याधीशयोरित्थशाले परस्परमुथशि
लयोगे सति अनयोर्मध्ये केन चित् एकेन साकं इंथित्थशालं इंदुचंद्रः इत्थशालतः मुथशिलं चेत्करो
ति तदा कंबूलं कंबूलनामा योगः स्यात् लग्नेशकार्येशयोर्मध्ये केन चिदेकेन सह चंद्र मुथशिले कंबू
लं ।।

ता॰ टी॰ ६७

भवतीत्युक्तं ताजिकभूषणे यथा निशाकरो योगकरग्रहाभ्यामेकेन चेत्सुथशीलं करोति कंबूलयोगः कथि
तस्तत्संनी पूर्णो हि सध्योधमकस्त्रिधासौसममध्यमयोर्मध्यमत्वेन गरि
नात्रिधा इत्युक्तं अन्यच्च व्ययोमुथशीलेविधुः केनचित्स्यात्तदा मुथशि
लः कंबूलयोगः इति तत्कंबूलं सामान्यतास्त्रिविधं श्रेष्ठमध्यादि श्रेष्ठमध्यं
आदिशब्देनाधमं एते भेदेनानाविधः स्मतं लग्नेशाकार्येत्वद्रष्टाणाच्चतुर्वि
धाधिकारभेदेन षोडशप्रकारकमित्यर्थः तद्यथा उत्तमोत्तमं १ उत्तममध्यमं

पुनमरणकुं॰

८ ६ ५ ९ ७ १५ बृ॰ १० ४ ३ ११ १ १२ २ रा॰ चं॰

२ उत्तमं ३ उत्तमाधमं ४ मध्यमोत्तमं ५ मध्यममध्यमं ६ मध्यमं ७ मध्यमाधमं ८ उत्तमं ९ मध्यमं १० मध्यम
ध्यम ११ अधमं १२ अधमोत्तमं १३ अधममध्यमं १४ अधमं १५ अधमाधमं १६ एतेषां प्रकटार्थं चक्रम् लिख्य
ते तत्र स्वोच्चोधिकारस्थोत्तमः स्वहद्दाद्रेष्काणस्वनवांशाधिकारो मध्यमः स्वप्रान्तुस्वनीचाधिकारोऽधमः

एतत्॥ स्यानत्रित
यराहित्यंसमाना
धिकारः उक्तंच म
नुष्यजातके कंबूल
मीप्राहितीयेत्थशा

| | | | | |
|---|---|---|---|---|
| उत्तमाधिकारश्चेद्‌ः | लग्नाधीशाकार्यो | लग्नार्थांशाकार्यौ: | लग्नाधिकारस्थौ | लग्नाधिकारस्थौ |
| मध्यमाधिकारश्चेद्‌ः | उत्तमाधिकारस्थौ | मध्यमाधिकारस्थौ | समाधिकारस्थौ | अधमाधिकारः |
| समाधिकारश्चेद्‌ः | उत्तमाधिकारः | मध्यमाधिकारः | समाधिकारस्थौ | अधमाधिकारः |
| ॥ ॥ | उत्तमाधिकारः | मध्यमाधिकारः | समाधिकारस्थौ | अधमाधिकारः |
| ॥ | उत्तमाधिकारः | मध्यमाधिकारः | समाधिकारस्थौ | अधमाधिकारः |

लेचंद्रोपिचेन्मुथशिलं मेषः विधत्ते खगेहेःधेस्वधमंपरर्हे समरीसंहेखबुक्रमस्ति ॥ १६ ॥

उत्तमोत्तमादि संज्ञानि स्थानेवे भेदमाह तत्रादो उत्तमोत्तमकंबूल लक्षणमाह यदीन्दुरितियदिइंदुश्चंद्रः
स्वगृहोच्चेसोनामभवतितादृशौतामकार्ययोताहृशेनेस्वगृहेत्वोच्चस्थितेनवालग्नाधीशेननथास्वगृहस्थेनवा
कार्याधीशेनपरस्परकृतमुथशिलेनसहइत्थशालीमुत्थशीलंकरोतितदातत्कंबूलंउत्तमोत्तममुच्यतेद्व
योउत्तमोधिकारप्राप्तत्वात् अयंप्रथमोभेदः अत्रषोडशकंबूलयोगेषु लग्नेशकार्येशयोरेकाधिकारत्वंपर
स्परमुत्थशिलंचनियतंचंद्रमुथशिलंतुलग्नेशकार्येशयोमध्येकेनचिदेकेनसहायेहितं ३७ अथोत्तममध्य

यदींदुः स्वगृहोच्चस्थस्ताहृशोलग्नकार्ययोरित्थशालीकंबूलंतुउत्तमोत्तममुच्यते ३७ स्वीय
हद्दाद्रेष्काणांकभागस्थेनेत्थशालतः मध्यमोत्तमेकंबूलंहीनाधिकृतिनोत्तमं ॥ ३८ ॥

मकेवलोत्तमयोः कंबूलयोग लक्षणमाहस्वीयेतिअथस्वीयहद्दाद्रेष्काणांकभागस्थेनस्वहद्दायांस्वद्रेष्का-
णेवास्वनवांशेवालग्नेधीशेनकार्याधीशेनच परस्पर कृतमुथशिलेनच स्वगृहगः स्वोच्चराशि
गतोवाचन्द्रश्चेन्मुथशिलं करोति तदोतममध्यमं कंबूलंस्यात कुतः चन्द्रस्योतमाधिकार
प्राप्तत्वात् इतरयोर्मध्यमाधिकार प्राप्तत्वात् ग्रंथकर्तातु मध्यमोत्तममित्युक्तं कुतः छन्दोभग
भयात् अत्रोसहरणं ममभाग्यंभविष्यति नवेति प्रश्नेतुलालग्नं तस्यास्वामी भृगुर्दशमेस्वहद्दा
यां दशांशे: १० भाग्यभवनाधीशोबुधः सप्तमेस्वहद्दायांचतुर्दशांशेः १४ अनयोःध

परस्पर मुथशिलं चंद्रः कर्के स्वगृहे चतुर्दशांशस्ताभ्यां मुथशिलीत्युत्तममध्यममेतत्कंबूलं भवति अयं द्विती
यः भेदः एवं हीनाधिकृतिः नाहीनाः गताः उत्तममध्यमाधिकाराः यस्य ताद्दशेन लग्नाधीशेन परस्परमु
थशिलेन स्वग्रह स्वोच्चोस्थो वा शशी चन्मुथशिलं करोति नदोतदोमतममेव कंबूलं भवति कुतः केवलं
चंद्रस्यांतमाधिकार प्राप्तत्वात् इतरयोः समाधिकार प्राप्तत्वात् उदाहरणं राज्याप्तिप्रश्ने लग्नं मिथुनं तस्य
स्वामी बुधः समस्य गृहे तिष्टति राज्यभवनाधीशो गुरुः समस्य गृहे कन्यायामस्ति चंद्रस्तुच्चे वृषे एवं त्र
याणां परस्परं मुथशिलयोगे सत्युत्तमं कंबूल जातं तेन राज्यप्राप्तिरुत्तमा वक्तव्या अयं तृतीयभेदः ३ अथ

उत्तमाधमतानीचरिपुगेहस्थितेन चेत्

श्लोकार्द्धेनोत्तमाधमकंबूल लक्षणमाह उत्तमेति स्वनीचराशिगतेन स्व शत्रु राशि गतेन वा लग्नाधीशे
न कार्याधीशेन च परस्परं मुथशिल योगे सति स्वगृहगतः स्वोच्चराशीगतो चन्द्रः तयोरन्यतरेया
चन्मुथशिलं करोति तदोत्तमाधमता उत्तमाधमाख्यं कंबूलं स्यात् कुतः चन्द्रस्योत्तमाधिकार प्राप्त
त्वात् इतरयोरधमाधिकार प्राप्ता चात् अत्रोदाहरणं स्त्रीप्राप्त
मप्रश्ने तुला लग्नं तत्स्वामी शुक्रः कन्यायां दशांशः २० नी
चे स्त्रीभवनाधीशो भौमः कर्के नीचे पंचदशांश
श्चंद्रोपि कर्के स्वगृहे द्वादशांशः ॥ १२ ॥

एषां परस्पर मुथशिल योगः उत्तमाधम कंबूलाख्यो जातो ऽतः स्त्री प्राप्ति रीषद्यासात्साध्या अयंच तुर्य भेदः अथ मध्यमोत्तम कंबूलं लक्षण माह सुहृद्दा दीति अत्र चन्द्रः स्वहद्दाया मित्युक्तं तर्हि हद्दाचक्र म वन्द्रास्याधिकारो नास्ति भौमादि पंच कस्यैव वर्त्तते अतः कारणात् आदिश ब्देनद्रेष्काणे स्व नवांशके वास्थितः सन् स्वभोच्चस्थेन स्व गृह गतेन स्वोच्चराशि गते नवाल ग्नाधीशेन कार्याधीशेनच परस्पर कृत मुथ शिलेन इत्थशाले कृत मुथशिलं चेत्करोति तदैत

स्वहद्दादिगतश्चन्द्रः स्वभोच्चस्थेत्थशालकृत् ३८
मध्यमोत्तममेतच्चपूर्वस्यान्नविशिष्यत॥

त्कंबूलं मध्यमोत्तमाख्यंस्यात् कुतः चन्द्रस्य मध्यमाधिकारप्राप्तत्वात् इतरयोरुत्तमाधिकार प्राप्तत्वात् एतत् मध्यमोत्तमोतमकंबूल पूर्वस्यात् पूर्वोक्तात् उत्तम मध्यम कंबूलान्नविशिष्यते नविशिष्ट फलदमित्यर्थः अत्रोदाहरणं स्त्री प्राप्ति प्रश्ने तुला लग्नं तस्य स्वामी शुक्रः लग्ने स्वगृहे चतुर्विंशत्यंशः २४ सप्तम भावो मेषः तत्स्वामी भौमः मेषे स्व गृहे अष्टाविंशत्यंशः २८ चन्द्रस्तु वृष कर्कौ विहाय मकरे स्वनवांशेद्वात्रिंशत्यंशेः २२ तेत्रेषां मुथशिलपरस्परम् भूदितिमध्यमोतमोरव्यंकंबूलं अत्र स्त्रीप्राप्तिरुत्तमा अयं पंचमोभेदः

अथश्लोकार्द्धेन मध्यमाधम कंबूल लक्षणमाह स्वहद्दादिपदस्थेनेति स्वहद्दायां स्वद्रेक्काणे वा स्व नवांशे वा स्थितेन लग्नाधीशेन कार्याधीशेन च परस्परं कृतमुथशिलेन स्वद्रेक्काणे स्वनवांशे वा स्थित श्चंद्रो मुत्थशिलं चेत्करोति तदा मध्यममध्यम कंबूलं स्यात् कुतः सर्वेषामध्यमाधिकार प्राप्तत्वात् अत्रोदाहरणं संतति प्रश्ने मिथुने स्वहद्दायामष्टमांशः ८ चन्द्रस्तु कर्के प्रथमे द्रेक्काणे स्वामी पनवांशे च स्त्रीयेस्ति अत्रयाणामपि परस्परं मुथशिल योगाच्च मध्यममध्यमाख्यं कंबूलं तेन संततिप्राप्तिर्मध्य

स्वहद्दादिपदस्थेन कंबूलं मध्यमं ४८ व्ययमं मकंबूलं स्याद्धीनाधिकृतिस्त्वथम् ॥ ॥

ममध्यमाभवति प्रयत्नेन साध्यत्यर्थः अयं षष्टोभेदः ३९।४८ अथ श्लोकार्द्धेन मध्यमकंबूल लक्षणमाह मध्यमपीति हीना रहिता अधिकृत्य योधिकारायेषांते हीनाधिकृतयस्तेषखेटाश्चतेभ्यो तातेमुथशिलं एतदुक्तं भवतिसोतममध्यमाध्यमाधिकाररहितेन अर्थात् समाधिकार प्राप्तेन लग्नाधीशेन कार्या धीशेन च कृत परस्पर मुत्थः शिलेन स्वमध्यमाधिकारस्थः शशीन्चेत् मुथशिलं करोति तदा म ध्यम कंबूलं स्यात मकंबूलं पर्यायः कुतः चन्द्रस्य मध्यमाधिकारत्वात् इतरयोः समाधि कारप्राप्तत्वात् ॥

हू॰ ६ त्रुटि॰ मिथुन लग्नं तस्य स्वामी बुधस्तुलायां स्वहद्दायां अहद्दायां अष्टांशः ८ सुतभवनाधीशः शुक्रो ॥ ६८

अत्रोदाहरणं संतति प्रश्ने वृषलग्नं तत्पतिः शुक्रः समस्य हद्दायां चतुरंशः सन् मकरेस्ति पंचमभवनाधी
शो बुधः समस्य हद्दायां पंचांशः सन् तुलायामस्ति चंद्रसुखे द्रेष्काणे कर्कैत्र्यंशास्ति परस्परमेतन्मुथशिले कृते
मध्यमकंबूलं जातं तेन संतति प्राप्तिरायाससाध्येत्यर्थः अयं सप्तमो भेदः अथाष्टमो कार्द्धेन मध्यमाधम कंबूलं
लक्षणमाह मध्यमाधमेति लग्नाधीशेन कार्याधीशेन च दत्तेन स्वशत्रु द्रेष्काणे वास्थितेन कृत परस्पर मुथशीलेन
स्वद्रेष्काणे स्वनवांशे वास्थितश्चंद्रो मुथशिलं चेत्करोति तदा मध्यमाख्यं कंबूलं स्यात्कुतः चंद्रस्य मध्य
माधिकाप्राप्तत्वान् इतरयोरधमाधिकारप्राप्तत्वात् अत्रोदाहरणं भाग्यप्राप्ति प्रश्ने मेषलग्नं तस्य स्वामी भौ

मध्यमाधमकंबूलं नीचारिभगखेटजं ४१ इंदुः परोनः स्वद्रेष्काणे स्वोच्चस्थितेनाप्युत्तमं तु तत् ॥

मः कर्के नीचे नवमभुवन स्वामी गुरुः मकरे नीचे चंद्रः कर्के स्वद्रेष्काणे एषां परस्परमुथशिल योगसत्वान्मुध्य
माधमकंबूलं जातं भाग्यप्राप्तिरायाससाध्या भवति अथायमष्टमो भेदः ४१ अथापरमुत्तमकंबूल लक्षणमा
ह इंदुरिति इंदुश्चंद्रः परोनः अधिकाररहितः स्वगृह स्वोच्च स्वद्रेष्काणस्वनवांश स्वामी च स्वशत्रु सेवरूप
धिकार रहितः किंतु समगृहादिगतः स्वद्रेष्काणे स्वोच्चस्थितेन स्वराशिगतेन स्वोच्चराशिगतेन वा लग्नाधी
शेन कार्याधीशेन वा परस्परमुथशिलेन चेन्मुथशिलेवान् भवति तदोत्तममेव कंबूलं स्यात् कुतः चं
द्रस्याधिकार शून्यत्वात् इतरयोरुत्तमाधिकारप्राप्तित्वात् अत्रोदाहरणं धनं लाभ प्रश्ने तुला लग्नं ल
ग्नाधीशः शुक्रः लग्ने स्वगृहे धनेशो भौमः मकरे उच्चे चंद्रः समद्रेष्काणे मिथुनेस्ति ६९

ता॰
टी॰
७०
८॰

षां परस्पर मुथशिल योग सत्वात् कंबूलं समांतमंजातमिति भाग्य प्राप्ति रुत्तमा अयं नवमोभेदः अथोपरं
मध्यम कंबूल लक्षणं श्लोकार्द्धेनाह स्वहद्दा दीति स्वहद्दायां स्वद्रेष्काणेवास्वनवांशेवास्थितेनलग्ना
धीशेन कार्याधीशेन चक्रतपरस्परमुथशिलेनसमाधिकारस्थितेचंद्रश्चेन्मुथशिलीतदा कंबूलंम
ध्यमंस्यात् कुतश्चंद्रस्याधिकाररहित्यादितरयोः मध्यमाधिकार प्राप्तत्वात् एतत् पूर्ववत् पूर्वोक्तम
ध्यमं कंबूलतुल्यफलदं उदाहरणं धनलाभप्रश्ने तुला लग्नं तस्य स्वामी शुक्रः सिंहे स्वहद्दायां दशांश १०
धनभावाधीशोभौमः धनुषि स्वहद्दायां दशांशः १० चंद्रस्तु मध्यमद्रेष्काणेमिथुने दशांशः १० तत्रैषांपर

स्वहद्दादिगतेनापिपूर्ववन्मध्यमुच्यते ४२ पादोनेनापिमध्यंस्यादितिपुक्तंप्रतीयते

सर मुथशिल योगोस्ति तस्मान्मध्येममेतत्कंबूलंभवति धनलाभो मध्यमो भवति अयं दशमोभेदः ४२
पुनः प्रकारांतरेण मध्यम कंबूललक्षणमाह श्लोकार्द्धेनपादोनेनेति पादोनेने उत्तममध्यमाधिकार
रहितेन लग्नाधीशेनकार्याधीशेनचक्रत परस्परमुथशिलेनसमाधिकारस्थितश्चंद्रश्चेन्मुथशिलीत
दामध्यमं कंबूलस्यातदित्यस्माभिर्युक्तं युक्ति सहंप्रतीयते कुतः सर्वेषां समाधिकार प्राप्तत्वात् उदा॰ धन
लाभप्रश्नेलग्नमेषः तत्स्वामीभौमः सिंहेदशांशः १० धनेशः शुक्रः कुंभेदशांशः १० एषां परस्परं मुथशि
लयोगंस्यात् जातंमध्यम कंबूलं तेनलब्धिर्मध्यमानोत्कृष्टा नोपकृष्टा चेत्यर्थः अयमेकादशोभेदः अथा
धम कंबूलं श्लोकार्द्धेनाह नीचारिस्थेनेत्यर्धालेइति स्वानीचराशिगतेनस्वशत्रु राशिगतेन वाल ॥७०॥

ग्नाधीशेन कार्याधीशेन च कृतपरस्पर मुथशिलेन समाधिकारस्थितश्चंद्रश्चेन्मुथशिलं करोति तदाऽधमाधया
ख्यं कंबूलं स्यात् कुतश्चंद्रस्य समाधिकारत्वात् इतरयोरधमाधिकारप्राप्तत्वात् उदाहरणं पुत्रप्रश्ने मिथुनल
ग्नं तस्य स्वामी बुधः मीने नीचे पुत्रभावाधीशः शुक्रः कन्यायां नीचे चंद्रः स्वधिकार रहितः अत्र त्रयाणां प
रस्परं मुथशिलयोगादधमं कंबूलं जातं तेन पुत्राप्ति चिंता अधमाधम फलाईषत्कष्टसाध्येति यावत् अयं
द्वादशो भेदः ४३ अथाधमोत्तम कंबूलं लक्षणमाह नीचप्राप्तेति यदि चंद्रो नीच राशिगतः शत्रु राशिग

नीचारिस्थेनेत्थशाले ऽधम कंबूलमुच्यते ४३ नीचशत्रुभगश्चंद्रः स्वभोच्च
च्चस्थेत्थशालकृत् अधमोत्तम कंबूलं पूर्ववत्तुल्यफलप्रदम् ॥ ४४ ॥

तो वा स्वगृह गतेन स्वोच्च गतेन वा लग्नाधीशेन कार्याधीशेन च परस्परं कृत मुथशिलेन चेन्मुथशिली
भवति तदा अधमोत्तम कंबूलं स्यात् कुतः चंद्रस्याऽधमाधिकारत्वात् इतरयोरुत्तमाधिकारप्राप्तत्वा
त् एवन्पूर्वमुक्तस्य कंबूलयोगस्य तुल्यं फलं प्रदाति उदाहरणं सुखप्राप्ति प्रश्ने लग्नं सिंहः तत्स्वामी सू
र्यः मेष उच्चे सुखभवनाधीशो भौमः मकरे उच्चे चन्द्रो नीचे वृश्चिके एवं त्रयाणां परं मुथशिले जाते सति

अधमोत्तम संज्ञकं कंबूल मभूदिति सुख प्राप्ति रीषदायासेन

साध्या भवति अयं त्रयोदशो भेदः ॥ ४४ ॥

अथाधममध्यमकंबूलं लक्षणमाह चंद्र इति यदि चंद्रो नीचगृहगतः शत्रुगृहगतो वा स्वहद्दायामादिशब्दे-
न स्वद्रेक्काणे करवनवांशे वा लग्नाधीशेन कार्याधीशेन वा कृत परस्परकृतमुथशिलेन चेदित्थशालीमुथ-
शिलीभवति तदाधममध्यमकंबूलमुच्यते कुतः चंद्रस्याधमाधिकारत्वादितरयोर्मध्यमाधिकारप्राप्त-
त्वात् उदा॰ पुत्रप्राप्तिप्रश्ने कन्यालग्नं तत्स्वामी बुधः मकरे स्वहद्दायां त्र्यंशः पुत्रभावाधीशः शनिस्तुमी-
ने स्वहद्दायां पंचांशोऽस्ति चंद्रस्तु नीचे वृश्चिके त्र्यंशः एषां त्रयाणां परस्परं मुथशिलयोगे जाते सति
अधममध्यमकंबूलं जातं तेन संततिप्राप्तिरत्यायाससाध्या ज्ञेया अयं चतुर्दशो भेदः ४५ अथान्यदाह

चंद्रो नीचारिगेहस्थः स्वहद्दादिगतो न चेत् इत्थशालीकंबूलं तदुक्तं नेधममध्यमं ४५ इंदु

नीचारिगेहस्थः पादेनेनेत्थशालिकृत कंबूलं मध्यमं ज्ञेयं पूर्वैस्तुल्यफलप्रदम् ॥४६॥

मकंबूलं लक्षणमाह इंद्विति यदीदुश्चंद्रः स्वनीचराशिगतः स्वशत्रुराशिगतो वा पादेनेन उत्तम
मध्यमाधमाकाररहितेन लग्नाधीशेन कार्याधीशेन वा कृत परस्परं मुथशिलेन चेन्मुथशिलीभ-
वति तदाधमाख्यं कंबूलं ज्ञेयं कुतः चंद्रस्याधमाधिकारप्राप्तत्वात् इतरयोः समाधिकारप्राप्तत्वा-
त् एतत्सर्वं मुक्तस्य कंदकंबूलयोगस्य तुल्यं फलप्रदं दाति उदाहरणं राज्यप्राप्तिप्रश्ने वृषलग्नं तत्
स्वामी शुक्रः पंचांशः सिंहे राज्याधीशः शनिर्वृषे दशांशः १० चंद्रस्तु नीचे वृश्चिके त्र्यंशोऽस्ति एषां मुथ-
शिलयोगे जाते धमकंबूल तेन राज्यप्राप्तिः कष्टसाध्यः अयं पंचदशो भेदः ॥४६॥

अधमाधमकंबूल लक्षणमाह हनीचारिभस्थेति स्वनीचराशिगतेन स्वशत्रुराशिगतेन वा लग्नेशेन
कार्याधीशेन च परस्परं कृतमुथशिलेन स्वनीचराशिगतः स्वशत्रुराशिगतो वा शशी चेन्मुथशिलं क
रोति तदा कंबूलमध्यमाधममुच्यते कुतः चंद्रस्येतरयोश्चाधमाधिकारप्राप्तत्वात् उदाहरणं पुत्रला
भप्रश्ने लग्नं धनुः तस्य स्वामी गुरुः मकरे नीचः पुत्रभावाधीशो भौमः कर्के नीचे चंद्रोऽपि मीने वृश्चिके
अत्र त्रयाणां परस्परं मुथशिलयोगे धमाधमकंबूलाख्ययोगस्तेन संततिलाभो नास्त्येवेति वाच्यं
अयं षोडशभेदः ४७ एवं षोडशधा कंबूलस्य भेदा उक्ताः अथ प्रागुक्तानां कंबूलभेदानां मध्ये उत्तमोत्तम

नीचारिभस्थखेटेन नीचारिभगतः शशी इत्थशाली कंबूलं तदधमाधममुच्यते ४७ ॥
मेषे रविः कुजो वापि वृषे कर्के थवा शशी तत्रेत्थशाली कंबूलमुत्तमोत्तमकार्यकृत् ४८

कंबूलयोगोदाहरणमाह मेषे इति अत्रापत्यप्रश्ने मेषलग्नं तत्स्वामी भौमः मेषे स्वगृहे पंचमभावा
धीशो रविर्मेषोच्चे अनयोर्लग्नाधीशकार्याधीशयोः परस्परमुथशिलयोगे सति चंद्रस्य वृषउच्चे क
र्कस्वगृहे अनयोर्मध्ये कोपि वर्द्धमानश्चंद्रश्चेन्मुथशिलं करोति तदा कंबूलमुत्तमोत्तमो कार्याकृतं वा
छितफलमित्यर्थः उदाहरणं पुत्रलाभप्रश्ने मेषलग्नं तत्र लग्नाधीशो भौमः स्वगृहे कार्याधीशो रविः मेषे
स्वोच्चे चंद्रोधिकर्के स्वगृहे अत्र उत्तमाधिकारः स्थितानां त्रयाणां परस्परं मुथशिलयोगे उत्तमोत्तमकंबू

अथातिनकंबूलं योगस्याधमाधमाख्यस्योदाहरणं माह वृश्चिकस्थ इति पुत्र लाभ प्रश्ने धनु लग्नाधीशो
गुरुर्मकरे नीचे पुत्रभावाधीशो भौमः कर्के नीचे वृश्चिकस्थः चंद्रो नीचे तत्र चंद्रभौमाभ्यां च षुगुरुभौमाःभ्यां
च मुथशिलयोगाज्जातं कंबूलमधमाधमाख्यं तद्वांछित कार्यविध्वंसं दुःदुःखं च ददाति उदाहरणं पुत्र-
लाभ प्रश्ने धनुर्लग्नं तत्र लग्नाधीशो गुरुर्मकरे नीचे कार्याधीशो भौम कर्के नीचे चंद्रो द्वितीये वृश्चि अ

वृश्चिकस्थः शशिभौमः कर्के तत्रेत्थशालतः अधमाधमकंबूलं कार्य
विध्वंसदुःखदं ४९ एवंपूर्वोक्तभेदानामुदाहरणयोजनां उक्तलक्षण
संबंधादुहनीयाविचक्षणै ५०

त्राधिमाकारस्थितानांत्रयाणां परस्पर मुथिशिल योगो ऽधमाधम कंबूलाख्यस्तेन पुत्रे लाभो नास्त्येवेति
वाच्यं ४९ अथायतिभयोः कंबूल भेदयोर्दिशा अंतरालवर्तिनां कंबूलभेदांनी मुदाहरणान्यूह्यात्याह
एव मेव पूर्वोक्त भेदानां विचक्षणैर्दैवरोरुदाहरणायोःजना उक्त लक्षण संबंधात्मा गुप्त लक्षण योजना
ऊहनीया विचार्या उदाहरणानि नोक्तानि कुतः
लक्षण वाक्यनांस्पष्टार्थत्वात् ५०॥

टी॰
ता॰
७५
८०

अथात्र केचित्कंबूल लक्षणे शीघ्रमंदगत योर्ग्रहयोरेक राशिस्थयोरेवमुथशिल योग माहुः तन्मतमुपन्यस्यति मेषराशिस्थे ऽ लेचंद्रमसि मेषस्थे नैव शनिना सह मुथशिल योगे वृते सति तदा एतादुत्पन्नं कंबूलमध्यमाधम संज्ञं जातं इत्यादिदृष्टांत वशात् शीघमंदगतिग्रहयोरेक ऽ राशिवस्थितत्वात् एवं मुथशिल योगादीनापरेजगुः आदिशब्देन सराफादयः तथाच समरसिंहः मेषस्थेब्जेशनिना कर्कस्थे भृगुवास्त्रियांकविनामकरस्थे गुरुणासह मीनस्थेनैसुभंच १ अस्यार्थः मेषराशिस्थे ऽब्जे चंद्रमसि स्थानांतरस्मानुक्तत्वान्मेषस्थेनेव शनिना सह कृत मुथशिले सति मध्यमाधम संज्ञं कंबूलं जातं कुतः अत्रहि चंद्रमेषे स्वग्रहोच्चाधि

मेषेस्थेब्जे शनीत्यादिदृष्टांतान्मध्यशीघ्रयोः एकर्क्षावस्थितामि
त्यशालादीनपरेजगुः ५१॥

कारे नास्ति स्वद्रेक्काणस्तु न संभवति शयाः स्वनकंशेस्त शनिस्तु नीचस्थ एव तथा कर्केस्थे चंद्रे भुभूवामंगलेन कर्नाख्यनीच स्थानगतेन कृत परस्पर मुथशिले सन्युन माधम कंबूलं जातं कुतः अत्रहि चंद्रः स्वग्रह चंद्रः स्वगृहस्थः भौमोनीचस्थः तथास्त्रियां कन्यास्थे चंद्रे कविना शुक्रेण कन्याख्य नीच राशि गतेन सह मुथशिले कृते सति मध्यमाधम कंबूलंजातं कुतः चन्द्रः स्वनवांशेस्ति शुक्रो नीचेस्ति अत्रापि चंद्रस्य स्वद्रेक्काणस्तु न संभवति तथा मकरस्थे चंद्रे गुरुणा मकराख्यनीच राशि गतेन सह मुथशिले सति मध्यमाधम कंबूलं जातमु कुतः अत्र चन्द्रः स्वद्रेक्काणेस्वा

णोस्वनवांशे वास्तिशुरुर्नीचे अत्रापि स्वद्रेष्काणस्तु न संभवति तथा मीनस्थे चंद्रे बुधेन मीनास्यनी
चस्थितेन मुथशिले सति मध्यमाधमकं बलं जातं कुतः अत्र चंद्रः स्वद्रेष्काणे स्वस्वनवांशेस्ति बुधे नी
चेस्ति इस्समुसरीहरणं पंचकं शुभं फलदं नेत्यर्थः ५१ अथैषामतं दृष्टांतेनैव दूषयति तत्स्युत्तमिति शीघ्रमंद
गतिग्रहद्वयोरेकराशिस्थयोरेव मुथशिलादि योगो विचार्य इति यत्केषांचिन्मतं तदयुक्तं न युक्तिसहमि
त्यर्थः कुत इत्यत आह नत्वगस्येति लग्नाधीशकार्याधीशयोर्मध्ये केनचिदेकेन ग्रहेण स्वनीचराशि

तदयुक्तं नीचगस्य नीचेन रिपुणा रिपोः इत्थशालं कार्यनाशी
त्युक्तं सत्रयतः स्फुटम् ॥५२॥

गतेन स्वनीचराशिगतेस्यतरग्रहस्य चेदित्थशालं तत्कार्यनाशीत्युक्तं वहिर्द्वयोर्ग्रहयोरेकं नीच
स्थानं भवति तथा रिपुणा रिपो लग्नेशकार्येशयोः परस्परं वैरे सति यन्मुथशिलं तत्कार्यनाशीत्यु
क्तं यतः कारणात्तत्र समरसिंहकृततजिकसंज्ञातंत्रे स्फुटं प्रकटार्थमुक्तमस्ति एवं चयथा मी
चेनो नीचेन च मुथशिलकारी तथा रिपुद्विषता तत्कं बलं नष्टं चंद्रेशोपि विनाशको मुष्मिन् १ अयं
द्वितीयो योगः एकराशिस्थयोरपि संभवतीति न दूषणत्वेनोपन्यसनीयः ग्रंथकर्त्ता तु प्राकर
ग्रंथसंदर्भवशाल्लिखितमित्यर्थः ॥५२॥

अथप्रकारांतरेण फलोत्पत्तिज्ञानार्थं कंबूलयोगस्य भेदांतरमाह लग्नकार्येति पूर्वं तु लग्नादीशकार्याधीश
योरभिन्नाधिकारस्थितयोश्चंद्रेण मुथशिले कंबूलमुक्तं इदानीं तु तयोरप्यधिकारभेद उच्यते यत्र लग्न
धीशकार्याधीशयोर्मुथशिलयोगो विचार्यते तत्र तयोर्मध्ये एकः स्वनीचगतोस्ति अन्यः द्वितीयः स्वर्क्षा-
दिपदहीनः स्वगृहे स्वोच्चे स्वहद्दायां स्वद्रेष्काणे स्वनवांशे स्वनीचे स्वशत्रुक्षेत्रे वा न भवति अर्थात् समाधि
कारेण तोस्ति अत्र समाधिकारगतश्चंद्रः अन्यमुथशिलं करोति तदापि कंबूलाख्यो योगः स्यात् ५३ अथसदृ

लग्नकार्यपयोरित्थशाले चैकोस्ति नीचगः स्वर्क्षादिपदहीनोन्यो चेदुः कंबूलयोगकृत ५३
तत्र कार्याल्पतो ज्ञेया यथा जात्यमर्थयन् अन्यजातिः पुमानर्थं तथैतत्कवयो विदुः ५४ यस्या
धिकारः स्वर्क्षादिः शुभो नाप्यशुभोपि च ॥

दृष्टांतमेतस्य फलमाह तत्रेति तत्र तादृशे कंबूलयोगे का
र्याल्पता ज्ञेया तत्र दृष्टांतः पुमान् जात्यन्नं विजातीयमर्थयन् प्रार्थयन् यथा अर्थं स्वल्पं लभते इत्यध्या
हारः तथैतत्कंबूलं कवयः पंडिता विदुर्जानंति अथवा यदा सजातीयमर्थयते तदान्यस्मै रुन्नावशात् व
ह्वपि कदाचित्प्रयच्छंति इत्यर्थः ५४ अथैतेषां केवलं वक्तुं कामस्तु उपयोगत्वेन अन्यमार्गगग्रह
लक्षणमाह यस्येति यस्य ग्रहस्य स्वर्क्षादि स्वगृहस्वोच्चस्वहद्दास्वद्रेष्काणस्वनवांशात्मकः शुभः शु
भफलदोधिकारो नास्ति अशुभोपि नीचशत्रुगृहगतः अशुभः अशुभ
फलदो ॥५५॥

ता॰
टी॰
७८
८८

धिकारोपि नास्ति पुनः केनापि शुभग्रहेण पापं ग्रहेण वा अदृश्यमूर्तिर दृष्टः सशून्याध्वगः शून्य मार्गे दृष्य
ते उच्यते अत्रार्थे सम्मतिर्नास्ति समरसिंहेनानुक्तत्वात् ५५ अथ शून्य मार्गग लक्षणं प्रतिपाद्यो गैरिकंबूल ल
क्षणमाह श्लोकद्वयेन लग्न कार्य इति लग्नाधीश कार्याधीशयोरित्यशालोसति तत्र शशी चन्द्रश्चेच्छून्या
ध्वगः शून्य मार्गगो भवति शून्य मार्गगः कथं जात इत्यत आह उच्चादि पदशून्यत्वात् स्त्री त्वं आदि शब्दे
न स्वग्रह स्वद्रेष्काण स्वनवांशस्वनीचस्वभत्रुभंरातत् स्थानस्य शून्यत्वात् हितत्वादित्यर्थः ५६ अतयवा

केनाप्यदृश्यमूर्तिश्च सशून्याध्वग इष्यते ५५ लग्नकार्येशयोरित्यशालेशून्याध्व
गः शशी उच्चादिपदशून्यत्वान्नेत्थशालोस्य केनचित ५६ यद्यन्यर्क्षं प्रविश्येषस्व
र्क्षोच्चरस्येत्थशालवान् गैरिकंबूलमेततु पदोनेना शुभस्मृतं ॥ ५७ ॥ ५७ ॥

दृश चंद्रस्य केनचित् लग्नाधीश कार्याधीशयोर्मध्ये केनचित्केन मुथशिल योगेत्र न भवति एता दृशश्चं
द्रोयदि दृश्यते वर्तमानः सनन्यर्क्षमग्रिम राशिं प्रविश्य यस्मिन्राशौ प्रविष्टः स राशिर्यस्य ग्रहस्य संग्रहं स्वो
च्चं वास ग्रह मस्मिन् यदि तिष्ठते नेग्रहेण सह यदि चंद्रो मुथशिलं करोति तदा गैरिकंबूलं कंबूलको योगो
भवति एतत् गैरिकंबूलं पूर्वोक्त कंबूलभेदतुल्य फलदं ज्ञातव्यं विशेषे यदि तु अन्य राशिगतश्चंद्र
स्तद्राशिस्थेन ग्रहेण यदोनेन स्वग्रहाद्यधिकाररहितो न मुथशिलं करोति तत् गैरिकंबूलमशुभम
म् निष्टफलदं स्मृतम् ५७ ॥

७८

ता॰ टी॰ ७९ ८१

अथास्य गैरिकंबूलस्योदाहरणं श्लोकत्रयेण हलस्ये इति अहं सुखं सौख्यं लग्नस्थे प्राप्स्यामि नवेति प्रश्ने क्रियमाणे सति तस्मिन्काले सिंहलग्नमास्ति तस्य स्वामी सूर्यः क्रिये मेषे अष्टांशे अष्टभिरंशैरुपलक्षितोस्ति सुखभवनं चतुर्थं वृश्चिकाख्यं तस्य स्वामी भौमः कुंभे रविभिर्द्वादशांशैरुपलक्षितोस्ति तयोर्लग्नाधीशकार्याधीशयोः सूर्यभौमयोः परस्परं मुथशिलयोगोस्ति तत्रास्मिन्योगे सति इंदुश्चंद्रः कन्यायामस्ति चरमेंशके त्रिंशांशे २९ अत्र विद्यमानस्य स्वर्क्षादिस्थभाभिकारहीनास्यास्य चंद्रस्य लग्नाधीशकार्याधी

लश्ये सुखमिति प्रश्ने सिंहलग्ने रविः क्रिये अष्टांशेः सुखयत्कुंभे भौमोंशै रविभिस्तयोः

५८ इत्थशालोस्तितत्रेंदुरकन्यां चरमेंशके स्वर्क्षादिपदहीनस्य नेत्थशालस्यकेनचित

५९ सत्वोच्चगेनशशिन्यदैस्थेनेत्थशालकृत गैरकंबूलमन्येन

सहायाल्लाभदायकम् ६० ॥ शयोर्मध्येकेनचिदेकेनमुथशिलयो




गो नास्ति परंतु चन्द्रस्तुलाग्रहं गंत्व कामोस्तित्त तुला लाग्रहं शनेरुच्चमस्ति अंतुः तुलास्थेनशननासहसीघ्रगामित्वात् अन्य राशिस्तुला तत्रगतश्चन्द्रो मुथशिलकारी भवति एतेद्दैयं विधिग्रहसंस्थाने गैरिकंबूलाख्यं जातं अथास्य फलमुच्यते अन्येनतृतीयेन सहायंतेन लाभं वांछितकार्यसिद्धिरूपं ददाति उदाहरणकुंडली यथा अस्मिन्नेवयोगे तुला राशौ बुधारस्ति ॥ ॥ ॥ ॥ ॥

७९

इति यस्यैकोप्यधिकारः शुभोऽशुभोनास्तितत्रगतश्चंद्रोबुधादिनाकृतमुथशिलश्चेतदाअनिष्टफलंगो
रिकंबूलंज्ञेयंअत्रोदाहरणेसमतिर्नास्तिसमरसिंहेनानुक्तत्वात् ६० अथखल्लासरयोगस्यलक्षणमाहअ
न्यमिति अत्रकेनचिदेकेनेतिपदमध्याहार्यंसमरसिंहेनायोग्युक्तत्वात् लग्नाधीशकार्याधीशयोः मुथशि
लयोगस्वरूपेलितएवतत्रपूर्वोक्तलक्षणेनचंद्रः शून्यध्वनिशून्यमार्गगास्तिएतादृशोप्यंद्रे स्तेनलग्ना
धीउभयोकार्याधीशयोर्मध्येकेनचिदेकेनसहमुथशिलयोगवान्नभवतिअथवातादृशोप्यंद्रेस्तेन
लग्नाधीशेनवायुतोयिनास्तिसंयोगः खल्लासरनामकोज्ञेयः अयंनशुभदः वीादृशः कंबूलफल

शून्येध्वनौदुरभयोर्नैत्यशालोनवायुतिः खल्लासरोनशुभदः कंबूलफलनाशनः ६१ अ
स्तनीचरिपुवक्रहीनभादुर्बलोमुथशिलंकरोतिचेत् नेतुमेधनविभुर्यतोमहोतेमुखेपि
नसकार्यसाधकः ६२॥

नाशनः मुथशिलयोगेसतिकेवलपोवाकंबूलंपूर्णंभवतिअत्रतुकेना
पिसहमुथशिलयोगाभावात्प्रत्यभावात्कंबूलंनाशयति ६१ अथरद्दयोगलक्षणमाह अस्तेतियोग्र
होस्तंगतः स्यात्अथवानीचगतः स्यात्अथवास्वसत्रुग्रहेस्यात्अथवावक्रीस्यात्अथवाहोनात्यल्पाभादिवीर्य
स्यसतेजोरहितमित्यर्थः एतादृशोग्रहोदुर्बलोज्ञेयः यदिदुर्बलोग्रहः केनापिभावस्वामिनासहमुथशि
लंचेत्करोतितसग्रहोतेमुखेप्यादावपितद्भावकार्यसाधकोनभवतियतः कारणाद्दृषग्रहोमहस्तेजोनेतुं
नविभुः समर्थोनभवति ॥६२॥

ता॰
टी॰
८१
८।

अथतनाहशास्यरहसंज्ञस्यनिर्बलग्रहस्यस्थानविशेषेस्थित्वासमयविशेषेणफलपाकमाहकश्चिस्थइतिका
याधीशयोर्दुर्बलग्रहः केंद्रस्थः सन् आपोक्लिमंग आपोक्लिमस्थानगतंलग्नाधीशग्रहं पुनःक्लिमुथशिलंक
रोतितदाविशिष्टंकार्यमस्तिः प्रथमतोभूत्वांते परिणामेणश्यतिनष्टंभवतियदि आपोक्लिमस्थोग्र
हः केंद्रस्थानेगतंग्रहं पुनःक्लिमुथशिलंकरोतितदापूर्वंप्रथमतः विनाशंविनश्यंप्राप्यपश्चात्त्वांते विशि

केंद्रस्थश्चयोक्लिमंगपुनःक्लिभूत्वादितोनश्यतिकार्यमंतेआपोक्लिमस्थोयदि
केंद्रस्थानंविनश्यपूर्वंभवतीहपश्चात् ६३ मंदस्वभोच्चादिपदेस्थितश्चेत्परोनशी
घ्रगक्तेत्यशालःतत्रापिकार्यंभवतीतिवाच्यंवक्रादिनिर्वीर्यपदेनचेत्स्यात् ॥ ६४॥

ष्टंकार्य्यंभवतितीवाच्यं ६३ अथदुष्फालिकुथयोगलक्षणमाहमंदस्वेतिमंदोमंदगतिग्रहः
स्वभोच्चादि स्वक्षेत्रे स्वोच्चे आदिशब्देन स्वहद्दायां स्वद्रेष्काणेस्वनवांशेवास्थितः सन्परेणे
नशीघ्रेण स्वभोच्चादिस्वभाधिकाररहितेन शीघ्रगतिग्रहेणाक्रांतश्चेत्शालश्चेद्भवतितत्रा
भीष्टं कार्यं भवनितीवाच्यं चेच्छीघ्रगतिग्रहः वक्रादिनवीर्यपदे प्रागुक्तास्तनीचरिपुव
क्तहीनभाइत्यादिनिर्बलस्थानेषुचेन्नस्यात् ६४॥

अथ दुत्योत्थ दिवीर योग माह वीर्योनितावितियदा लग्नाधीश कार्याधीशौ वीर्योनितौ अस्तनीचरिपुक्त हीनभाइत्याद्युक्तरीत्या निर्वलौ स्यातां तयो लग्नाधीश कार्याधीशयो र्मध्ये एक श्चिदेक स्तृतीयेन ग्रहेण स्वर्द्दादिगेन स्वग्रहोच्चस्वहद्दादिगतेन सह पुनक्ति मुथशिलं करोति तदान्य साहाय्यतस्तृतीयोयः कश्चित्सहायभूतस्तस्तकाशात्कार्यं संतः शिष्टा उशंति वांछंति अथवा यदान्योयौ कौचित्कौग्रहौ वलिनौ स्वग्रहोच्चादिगौ संतौ लग्नाधीश कार्याधीशयो मध्ये केनचित्केन सहपुनक्तः मुथशिलं कुरुतस्त

वीर्योनितौ कार्यविलग्ननाथौ स्वर्द्दादिगेनान्यतरो पुनक्ति। अन्योयदा तौ
वलिनौ तदान्य साहाय्यतः कार्यमुशंति संतः ६५ वलीराश्यंगतोन्यर्द्दगामी दीप्तांशकैर्मह: दत्तेन्यस्मै कार्यकरस्तंवीरो लग्नकार्ययोः॥६६॥

दान्यन्न साहाय्यतः कार्यमुशंति संतः इति ६५ अथंतवीरयोगस्य लक्षण माह वलीतियदा लग्न कार्ययोः लग्नाधीश कार्याधीशयो : परस्पर मुथशिल योगो भवे तदानयो मध्ये कश्चित् वली ग्रहः राश्यंगतः स्वक्रांत राश्यंतिमांशः २१ वतीसन् यदान्यर्द्दगामी अग्रिम राशि गमन कामः स्वदीप्तांशकैरन्यस्मै अग्रेम राशि विद्यमानाय ग्रहाय मंक्तेजो दत्तेसतंवीरयोगः अग्रिम राशिगतो ग्रहश्चेत् स्वग्रहादि वलयुक्तस्तदायंयोगः कार्यकरो भीष्टकार्यकतास्यात्

अथ कुत्थ लक्षण माह अत्र कुत्थ शब्देन यवनभाषयावली ग्रह ग्रह उच्यते तत्र वलमनेकप्रकारं तत्र कां
श्चित्प्रकारान् प्रथम श्लोकेनाह लग्न इति अत्र ग्रहोवलीत्यन्वयः तत्रापि सर्वापेक्ष्यो लग्नस्थोवलीतद
भावे केंद्रस्थ चतुर्थसप्तम दशमस्थानेषवलीपरंतु लग्नस्थापेक्षयान्न्यूनवलः तदाभावेयोग्रहोविलग्न
दर्शीविलग्नंपश्यंति विलग्नदर्शी तृतीयनवमस्थोवलवान् भवितयद्वा निकटेपिवा अस्याविलग्नदर्शीति
विशेषणविशेष्यभावः अस्य केंद्रस्य निकटे पणफरे आपोक्लिमेच स्थितः सन् विलग्नदर्शी तृतीय पंच
मः लग्नस्थापेक्षयान्यूनवलः तदभावेस्य केंद्रस्यनिकटेपफरे द्वितीयपंचमैकादशस्थानेषुवलीकेंद्रस्था
पेक्षयाः

लग्नेथकेंद्रे निकटेपिवास्यविलग्नदर्शीस्वग्रहोच्चहद्दकोमुसल्लहे स्वेनिजहद्दगो
वावलीग्रहोमध्यगतिस्त्वशीघ्रः ६७ ॥

मनवमैकादशस्थः सवलवानित्यर्थः अन्येषुषउष्टद्वादशा५ वार्जित पणफरापोक्लिमानं निकटे पदेन सं
ग्रहः षडादिष्वपिगणितागतदृष्टौ सोपकथं चिद्वलीत्यर्थ इत्याहुः तथायोग्रहः स्वग्रहेस्वोच्चेस्वद्रेकोण-
स्वमुसल्लहेस्वनावांशेस्वहद्दायांवर्तमानो वलीतथामध्यगतिः नंदाख्याभुजगाख्येरित्याधुक्तमध्यगति
तुल्यस्पष्टगतिग्रहोवलवान् भवति तथाऽशीघ्रोऽशीघ्रः मध्यगत्यपेक्षायाऽल्पगतिग्र
होवली ६७ अथान्यान्प्रकारान्नाह कतोदय इतियोग्रहः कृतोदयः उदितः

सवलीतथामार्गगतिर्मार्गग्रहोंचलोतथाशुभेनशुभग्रहेणयुतः दृष्टितोवासवलीतथाक्रूरखगस्य
पापग्रहस्यदृत्तारव्ययाचतुर्थदशमसप्तमैकराशिदृष्ट्यानाधिगतःनदृष्टः सबलीतथाक्रूरेणनयुक्तः
पापग्रहेणयुक्तोनभवतिएवंसामान्यतोग्रहेणावलमुक्त्वाइदानींसमयवलमाहसायंचसितेंदुभौमाइ
तिइस्मग्रिमश्लोकेनसंवध्यते ९७ अथान्यप्रकारमाहयदेतिसितेंदुभौमाः शुक्रचंद्रभौमाःसायंसंध्याका
लेयदेदयंतेतदावलिनःजीवार्कजौगुरुशनीअपरात्रिभागेअर्धरात्रादुपरिभागेवलिनोतथानराःपुरु
षग्रहाःसूर्यभौमगुरवोदिवादिवलिनःअन्येग्रहाःचंद्रवुधशुक्रशनयोनिशिरात्रौवलिष्टाःतथास्व

कृतोदयोमार्गगतिः शुभेनयुतेक्षितेः क्रूरखगस्यदृष्ट्यादृत्तारव्ययानाधिगतोनयुक्तः
क्रूरेणसायंचसितेंदुभौमाः ९७ यदोदयंतेपरात्रिभागेजीवार्कजावन्हिनराःसवीर्याः
अन्येनिशीनस्यनवैकभागेस्थिताः स्थिरर्क्षेचवलेनयुक्ताः ९८॥

सूर्यस्यनैकभागस्थिताः सू
र्यधिष्ठराशिनवांशेतस्मिन्नेवेनवांशेयदुग्रहानस्युःतदापिवलिनोभवंतितस्मातन्येनिशीनस्यनवैक
भागेस्थिताइतिपाठःसाधीयान्अन्येनिशीनस्यतथैकभागइत्यपिपाठःउक्तंचसमरसिंहेसूर्यस्यनैक
भागेस्थिरराशौवातदाचतेवलिनःइत्यत्रसूर्यस्यचैकभागेइतिपाठंधृत्वाएकभागेएकराशिनवांशेइति
व्याख्यानंकुर्वंतितनउत्तममितिस्याप्येवंसंभवातनचास्तमितःक्वचित्तुग्रंथेवलीश्रूयतेप्रत्युतअस्मिन्नेव
ग्रंथेनिर्वलश्रूयतेतस्मात्सूर्यस्यनैकभागइतियुक्तःपाठःतथास्थिरर्क्षेचवृषसिंहवृश्चिककुंभराशिस्थाः
ग्रहाःवलेनयुक्ताःवलिष्टाज्ञेयाः ९९॥

ता॰ टी॰ ८५

अथान्यान्प्रकारानाह स्त्रीयरतिस्त्रियः स्त्रीग्रहाश्चतुर्थाच्चतुर्थभावमारभ्यषट्कगाः षड्राशिगतावलिनः स्युः चतुर्थाद्यावंतम्रमं तावन्मध्येवर्तमानावलिनः स्युरित्यर्थः पुरुषाः पुरुषग्रहाः वियत् भावाद्दशमभावमारभ्यषड्राशिगताः वलिनः स्युः दशमाद्यावान्तृतीयं तावन्मध्येवर्तमानावलिनः स्युरित्यर्थः तथाओजभागाविषमराशिस्थाः पुमांसः पुरुषग्रहावलिष्टाः अपरेस्त्रीग्रहाः समेसमराशौवलिनः स्युः एतेषुपूर्वोक्तधनेकेषुवलभेदेषुविशेषंशुभाधिकाररूपंविमृष्यविचार्यफलंशुभंतिगधवक्तव्यं ७॰ अथदुरष्ष

स्त्रियश्चतुर्थात्पुरुषाद्वियद्भाच्च षट्कगाओजभागाः पुमांसः समेपरेस्युर्वलिनोविमृष्यावि

शेषमेतेषुफलंनिगद्यं ७॰ लग्नेत्वष्टाष्टमेंत्येनृजुरारिगृहेगोनीचगोवक्रगामीक्रूरैर्युक्तोस्त

गोवायदिचमुथशिलीक्रूरनीचारिभस्थैः ॥ लक्षणमाह अत्रपवनभाषयादुरष्फशब्देननैर्व

ल्यमुच्यतेतच्चानेकप्रकारंतत्रकियंतः प्रकारान्प्रथमश्लोकेनाह लग्नादिति अत्रनिर्वलायमत्यर्थः

लग्नाद्वर्षलग्नान्मासदिनप्रश्नलग्नाद्वायः कश्चित् ग्रहः षष्टेस्थाने ऽथवा ऽष्टमेयवांत्येद्वादशेवर्तमानः सन् निर्वलोभवतितथानृजुर्वक्रगतिग्रहोनिर्वलः तथाअरिगृहगः शत्रुराशिस्थोनिर्वलः तथानीचगः नीचराशिगतः निवलः तथावक्रगामी वक्राभिलाषी ग्रहोनिर्वलतथाक्रूरैः पापग्रहैर्युक्तोग्रहोनिर्वलः तथास्तगः अस्तंगतोग्रहोनिर्वलः तथायदि क्रूरनीचारिभस्थैर्मुथशिलीशरिवा ८५

कश्यदुरुः

क॰ १२।२०।४२ अनेनप्राने॰ पात्यांशा॰ ६।४८ गुणिता॰ जातानिप्रानिदशादिनानि ८४।७।५३ एवंजाता॰ सर्वेषां हीनांशा॰ पत्यांशा॰ सौरसोवनदशादिनाद्यालिख्यते ४ अथांतर्दशानयनमाह दशामानमितिस्पष्टोर्थ॰ यस्यग्रहस्यदशामध्येंतर्दशांशाक्रियतेतस्यक्रियादशामानंदिनघटीपलात्मकंतदेवसमामानंप्रकल्प्यउक्तविधिना अंतर्दशासाध्याउदाहरणंप्रानिदशा ८४।५५।१७ पात्यांशयोगेन २८।३५।१३ भक्ताजातोगुणक॰ २।४८।८ अनेनप्रानिपात्यांशागुणिताजाता॰ प्रानिदशामध्येप्रानेरंतर्दशा २८।६।३८ एवंजाताप्रानिदशामध्येसर्वेषामंतर्द

दशामानंसमामानंप्रकल्प्योक्तेनवत्मनाअंतर्दशासाधनीयाप्राकपात्यांशवशेनतुआदेवंतरशायाकपतेस्ततक्रमतोपरा ५ एकैकराशिवृद्ध्याचेद्गुल्योसाधिर्यदारवि॰ तदामासप्रवेशोकप्रवेशाश्वेत्कलासम॰ ६॥

शालिख्यते ५ अथमासप्रवेशादिनप्रवेशानयनमाह एकैकेतिजन्मकालीनंसूर्योदयाद्दशोराश्यादिभवतिसएकादशधास्थाप्य॰ एकद्वित्र्यादिराशिवृद्ध्यायुक्तोयथावस्थितांशादित्यल्पेयस्मिन्मासेघटीपलात्मकेकालेभवतितदातत्संख्याकोमासप्रवेशोज्ञेय॰ एतदुक्तंभवतिप्रथममासप्रवेशस्तुवर्षप्रवेशएवजात॰ तत्रजन्मार्कतुल्यएवार्कोस्तिद्वितीयमासप्रवेशश्चेत् क्रियतेतदैकराशिसंयोजनात् अंशकलाविकलासमत्वंराशौयोजियतेतनतुल्य॰ सूर्य॰ यद्दिनेयस्मिन्समयेतदाद्वितीयमासप्रवेशोस्तिभवतिएवमग्रेपिवोध्यंदिनप्रवेशश्चेत् क्रियतेतदैकैकांशसयोजनात् कलाविकलासमत्वंयस्मिसमयेतन

ता॰
टी॰
१२५
।४७

अथपंचांगान्मासप्रवेशघटिकाद्यानयनमाह मासार्कस्यातिएकैकराशियोगेनजातोमासप्रवेशार्कः अस्या
सन्नपंचांगस्तिपदवध्यर्कस्तदवस्तिस्थितार्कयोरंतरंकार्यंतस्यकलाः अवधिस्थार्कगत्याभाज्याः फलदिना
द्यंत्रिस्थंवासरघटीपलात्मकाग्राह्यंतत्फलंअवधिस्थवारादौयुतोनितंकार्यंतद्यथाअवधिस्थार्कतोमास
मासप्रवेशार्काधिकश्चेत्तदाअवधिस्थवारादौयुक्तंकार्यंन्यूनेहीनंकार्यंतस्मिन्वाराद्येवारघटीपलात्मकेका
लेमासप्रवेशोभवतिएवमेवानयारीत्याद्युप्रवेशोदिनप्रवेशोज्ञेयः अवधिस्थवारादावित्यत्रअवधिस्थघ
टिकानग्राह्याः कुतः यद्ग्रामस्थपंचांगं तत्ग्रामस्थचरदेशांतरसंस्कारस्यकृतत्वात् इतिकारणादवधिस्थवा

मासार्कस्यतदासन्नपंतपर्केणसंहातरंकलीकृत्वार्कगत्याप्तंदिनाद्येनयुतोनितं७तत्पं
क्तिस्थंवारएवंमासार्केधिकहीनकेतद्वाराद्येमासवेशोप्येवमेवच ॥८॥

रादावित्यत्रसंस्काररहितावाराघटीपलात्मकोअब्दयोग्राह्यः सयथायस्मात् ग्रंथात् पंचांगस्थितःसूर्य
साधितः तस्मात् ग्रंथादब्दयः साध्यः परत्वेतावान् विशेषः यदिग्रंथादावब्दयेउदयांतरभुजफलंचरसं
स्कारश्चेत्कृतोभवति तदासंस्काररहितोऽब्दयः कार्यः यथारामविनोदस्याब्दयेग्रंथादावुदयांतरंभुज
फलकाशीस्थचरसंस्कारः कृतोस्तितथामकरंदस्याब्दयेग्रंथादौकेवलकाशीस्थचरसंस्कारः कृतो
स्तिइतिकारणात्संस्काररहितोब्दयः कार्यः तदनंतरं अस्मिन्संस्काररहिताब्दयेयस्यामासप्रवेशःक्रिय
तेतस्ययत्ग्रामेजन्मनतत्ग्रामस्थचरदेशांतर उदयांतर भुजफलसंस्कारः कार्यः शोब्दयःसूक्ष्मोभवति

ता॰
टी॰
१२६
१७५

ति परंतु एतत्संस्कारचतुष्टयमध्ये जन्मकालीनसूर्येयावद्भिः संस्कारैसंस्कृतो भवति तावद्भिः संस्कारैरव्ययः संस्कार्यः तदनंतरं मासप्रवेशार्कावधिस्थार्कयोरंतरात् यत्पूर्वानीतवारादिकं तस्मिन्नव्ययेउक्तरीत्यायुतो न कार्यस्ता: मासप्रवेशसूक्ष्मघटिका भवंति घटीजन्मकालीनः सूर्यो रामविनोत्साधितोस्ति पंचांगस्थितोवधिस्थार्कोपि रामविनोदात्साधितो अथवा जन्मकालीनस्तथावधिस्तस्थार्कयोः साधनं मकरंदाच्चेत्कृतमास्ति तदा सूक्ष्मघटिकाः भवंति अत्रोदाहरणं ग्रहलाघवाज्जन्मकालीनः स्पष्टोर्कः ८।७।३०।६ एकराशियुक्तोजातो द्वितीयमासप्रवेशार्कः ९।७।३०।६ अस्यासन्नफाल्गु

भूपंचचंद्राः १५कुगुणाः ३१कुरामाः ३१सिद्धा२४ गताब्दैर्गुणितासमेताः खे
गा॰ ब्धिदस्रै २४ गुणलोचनैश्च २३ तलगे ७२ रर्कमुखोव्ययः स्यात् १

णकृष्णानवमी ९ भृगौरामविनोदस्थपंचांगस्थितअवधिस्थार्कः १०।१०।२।३० अनयोरंतरं ०।२।३१।३२ अस्यकला ११५१।३२ अवधिस्थार्कगतिकलाभिः ६०।३१ भक्ताः सवर्णितौभाज्यभाज्यको भाज्यः ८०।९२भाजकः ३६३१भाजकेनहते भाज्ये फलं दिनघटिपलात्मकं २।३०।१३।७० अथ रामविनोदस्य पंचांगस्थिते ग्रहे सति अव्ययानयनं माभूदिति यस्मिन्वर्षे रामविनोदः कृतोस्ति तस्मिन्वर्षे प्राकः १५ १२ अयं स्पष्टशाकमध्ये १५।५० शोधितः शेषंगताब्दाः ३० अयमंकः २।१५।३१।३२।२४ गताब्दैः ३० गुणितोजातः ६७।४८।५७।५३।१२ एतन्मध्येयं द्वयो २४।२३ योजितः ६७।२४।२०।५३।१२ ऊर्ध्वांकेसप्तनष्टेजातोव्ययः ५।५६।५७ परंतु एतन्मध्ये उद्धेउघातरभुजफलचरफलसंस्कारः कार्कमैदि

तत्रादौ उदयांतरसाधनं ग्रंथादौ स्पष्टाः २५।१२ अस्मिन्शाके मेषसंक्रांतिसमये सूर्यः ०।०।०।० अयनांशाः १६।२४।१४ त्रस्तनुल्यात् साधितमुदयांतरफलात्मकं ऋणं २३ ग्रहापेक्षावद्ये विपरीमित्युक्तत्वात् जातं धनं २३ इष्टमवद्ये ऊनं जातो उदयांतररहितोवद्यः ६।१४।८ अथभुजफलमाह सूर्यान्मंदफलं धनं २।७ अस्यकलाः १२७ भाजकेन ३६० भक्ताः लब्धघटिकाद्यंभुजफलंधनं०।२१ विपरीतिमित्युक्तत्वात् जातमृणं ०।२१३ मुदयांतर संस्कृतावद्ये ६।१४ युतंजातमुदयांतरभुजफलसंस्कृतोवद्यः ६।१४।२९ अथचरसंस्कारमाह काष्ठ्यां फलभा ५।४५ चरखंडानि ५७।४६।१९ चरं ऋणं पलात्मकं ३१ विपरीतमित्युक्तत्वात् जातं धनं ३१ इदमुदयांतरभुजफलसंस्कृतावद्ये ६।१४।२९ रहितं जातः उदयांतरभुजफलचरसंस्कृतोवद्यः ६।१३।१३।५८ अनयारीत्यासंस्काररहितोवद्योजातः उदाहरणप्रदर्शनार्थं एतावत्यदर्शितं अथसुगमोपायः कथ्यः ते पूर्वग्रंथादावुदयांतरभुजफलचरमानीयतेषां त्रयाणांपरस्परसंस्कारे कृते सति त्रयो विंशति २३ पलानिक्रमाणिज्यातानिस्थिराणि अभीष्टवर्षे पूर्वोक्तश्लोकेनावद्यपश्चेत साध्यतेतदातस्मिन्नवद्यपपलेपुत्रयोविंशतिपलानिरहितानि कार्याणि अभीष्टवर्षे शोवद्यः संस्काररहितोभवतियथा पूर्वानीत अवद्यः ६।१४।२१ अयंत्रयोविंशतपलैरहितः कृतः पूर्वानीत संस्काररहितावद्यस्तुल्योवद्यः ६।१३।२८।१ वा राम विनोदस्थपंचांगे अभीष्टवर्षे संस्कारत्रयरहितावद्यानयनमास्ति अवद्योघत इति यस्मिन्वर्षे राम विनोदः कृतस्तस्मिन्वर्षे सकः २५।१२ अथमिष्ट

धितः जातानि गतवर्षाणि ३८ एभिर्द्युयमंको २०७ गुणितो जातः ७८६६ गतवर्षगणः चतुर्दशभिर्गुणितः १२२ अनेन ४५ भक्तः फलं घटिकाद्यं २२।४८ इदं पूर्वांकमध्ये ७८६६ युते ७८६६।२२।४८ अस्मिन्नर्द्धांकेयमंको-३२० योजितः ८२८६।२२।४८ अस्य प्रांते ८०० भक्तं फलं दिनघटीपलात्मकं १०।१३।५८ अस्योर्द्धांके गतवर्षाणि ३८॥ युतानि ४८।१३।५८ सप्तभिस्तष्टानि शेषांकप्रमितो जातोऽब्दः ६।१३।५८ जन्मकालीनसूर्यमध्ये चरदेशांतरसंस्कारः कृतोस्तीति कारणात् अस्मिन्नब्दे स्वदेशीयचरदेशांतरसंस्कारः क्रियते अवधिस्था

शब्दोघतः शैलनखैः २०७ विनिघ्नात्पुनर्मनुघ्नं गतवर्षवृंदं शराब्धिभक्तं ४५ घटिकादिलब्धं युतं नभोश्व्यग्नि ३२० युतात् खरवेभैः ८०० हतात् दिनाद्यं गतवर्षयुक्तं सप्तोद्धृतं मेषमुखोऽब्दः स्यात्॥

कोश्चरं पलात्मकं धनं ७८ षष्टीभक्तं जाते घटिकाद्यं १।१८ विपरीतमित्युक्तत्वाज्जातं ऋणं १।१८ इदमब्देऽस्मिन् ६।१३।५८ रहितं जातश्चरसंस्कृतोऽब्दः ६।१२।४० देशांतरयोजनानि धनानि ३० चतुर्थांशोनितानि पलानि २२ विपरीतमित्युक्तत्वाज्जातानि ऋणानि २२ एतानि चरसंस्कृताब्दे रहितानि जातश्चरदेशांतरसंस्कृतोऽब्दः ६।१२।१८ अवधिस्थार्यमासप्रवेशार्कयोरंतरात्पूर्वं साधितवारादिकमिदं २।३८।२३ अवधिस्थार्कतः मासार्कस्य न्यूनत्वात् स्पष्टाब्दे ६।१२।१८ रहितं जातो मासप्रवेशकालः ३।४२।५ एवं जाताः फाल्गुन कृष्ण ६ भौमे द्वितीयमासप्रवेशे स्थूल

ता॰
टी॰
१२९
१२५

लघटिका: ४।५ कृत: ग्रहलाघवाज्जन्मकालीन: सूर्य: साधितोस्ति रामविनोदस्य पंचांगस्थित अवधिस्था
कैर्गृहीतोस्ति एकग्रंथादुभयो: साधनंचेक्रियते तदासूक्ष्मघटिका: भवंति अतएवावितावार्यग्रंथभेदंस
ति पंचांगोपरि सुगमोपायत्वान्मासप्रवेशानयनं सर्वै: क्रियते तदस्तु अथसूक्ष्मघटिकानयनमाह यस्मा
त् ग्रंथात् जन्मकालीन: सूर्यो यावद्भि: संस्कारै: संस्कृतोस्ति तावद्भि: संस्कारै: तस्मात् ग्रंथात् मासप्रवे
शार्क: मासप्रवेशदिवसे सूर्य: साध्य मासप्रवेशदिवसे ज्ञानं पंचांगोपरि अन्नमानेज्ञातुं शक्यते जन्मका
लीन सूर्ये एकराशौ योजितो मासप्रवेशार्क: मासप्रवेशदिवसे सूर्योय: साधितो भवति तयोर्मासप्रवेशार्क
योरंतरकार्यं तस्य काल: ते कार्या मासप्रवेशसूर्योय: साधितो भवति तस्य कलाभिर्भाज्या: फलं दिनघटी
पलात्मकं ग्राह्यं मासप्रवेशे सूक्ष्मघटिका: भवंति उदाहरणं ग्रहलाघवा जन्मकालीनचरदेशांतर
संस्कृत: स्पष्टोर्क: ७।८।३० जात: एकराशियुक्तो जातो द्वितीयमासप्रवेशेर्क १०।७।३।६ फाल्गुणकृ
ष्णा ६ भौमे ग्रहलाघवादहर्गण: ३६।२४ चक्रं ८ सूर्योदये मध्यमोऽर्क: १०।५।७।५५ देशांतरविकलाभिर्यु
क्तो १०।५।८।५७ मंदकेंद्रं ४।२२।५१।४३ मंदफलं धनं १।३५।५ संस्कृतोर्क: १०।६।४४।६ चरं ३ धनं १।२४ सं
स्कृतो जातो मासप्रवेशदिवसे स्पष्टोर्क: १०।६।४५।३० स्पष्टागति: ६।३५ उभयोरंतरं ०।०।४४।३६ अस्य
कला ४४।३६ गतिकलाभि: ६०।३५ भक्ता: सवर्णितो भाज्य: २६७६ भाज्यको ३६।३५ भाज्जनाल्लब्धं दिनघटी
पलात्मकं ०।४४।१० एवं फाल्गुणकृष्णा ६ भौमे सूर्योदयात् गतघटीषु ४४ पलेषु १५ जातो द्वितीयमासप्रवेश: अ
नयोरीत्या चेत्साध्यते तदा मासप्रवेशे सूक्ष्मघटिका भवंति अस्मिन्समये ॥

सूर्यः २०।७।३०।६ अयंपूर्वतुल्योजातः एवमग्रेपिबोध्यंअनयारीत्यादिनप्रवेशः साध्यःमास
दिनप्रवेशसमयेग्रहभावाःसाध्यःपंचवर्गीफलादिकंविचार्यअथग्रथालंकारस्तत्रगणितामहवर्णन
माहआसीदितिचिंतामणिसंज्ञकः १ आसीत्बभूवतचिंतामणिःअसीमगुणमंडितपंडिताग्र्यः अ
सीमानिर्मर्यदाःअनंताःगुणाःसाधुत्वादयःतैर्मंडिताभूषिताःयुक्ताःइतियावत्येपंडिताःशास्त्रज्ञाःते
ष्वग्र्यःश्रेष्ठःअतिपंडितःइत्यर्थःपंडित्यमेवविवृणोतिपुनःकथं॰भुजंगयगवीःभुजंगयःशेषनागः
तस्यगावोवाण्यःमहाभाष्यरूपाःव्याख्यात्सदामहाभाष्याध्यायकइत्यर्थःपुनकःश्रुतिदित्वेद

आसीदसीमगुणमंडितपंडिताग्र्योव्याख्याभुजंगयगवीःश्रुतिवित्सुवृत्तःसाहि
त्यरीतिनिपुणोगणितामभज्ञश्चिंतामणिर्विपुलगर्गकुलावतंसः १ तदात्मजो
नंतगुणोस्त्यनंतोयोघोक्तवदुक्तीःकिलकामधेनुं

विद्यामर्मज्ञःपुनकः॰सुवृत्तःसमीचीनाचरणःयथाकालविहितश्रौतस्मार्तकर्मानुष्ठानशीलःपुनः
कःसाहित्यरीतिनिपुणःअलंकारज्ञानविषयेपंडितइत्यर्थःपुनःकः॰गणितामभज्ञः॰ज्योतिःशास्त्रज्ञः
पुनःविपुलगर्गकुलावतंसःविपुलंमहद्गर्गर्षेर्वंशःतस्यावतंसःभूषणरूपःगर्गगोत्रोत्पन्नइत्य
र्थः १ अथपितृवर्णनमाहतदात्मजइतितदात्मजश्चिंतामणिदैवज्ञस्यपुत्रःअनंतअनताख्योदैवज्ञः
असिद्धोस्तिपृथिव्यांअनंतगुणःअसंख्येयगुणाश्रयीभूतःसकःअसंदिग्धंकामधेनुंकामधेनुसं
ज्ञंतिथियादिपंचांगसाधाकंज्योतिःशास्त्रेप्रसिद्धग्रंथंतस्मातदुक्तीःग्रंथेगणितव्याख्यानानिअधो

कार्यद्कामधेनुसमागुणपण्यतनेकाशतथं: किंमं

ता॰
टी॰
१३२

तुष्टयेसतांगुणग्राहिणाहिणांदैवज्ञानांसंतोषार्थंजातकपद्धतिंउत्पन्नवालवालकस्यतज्जन्मकाल
मधिकृत्यशुभाशुभनिरूपकंशास्त्रंतदुपजीव्यगणितप्रतिपादिकादिकाकृतिंन्यरूपयत्‌तन्रूपित
वान्‌ननुश्रीपत्यादिपद्धतीनांसत्वेनकथंतांकृतवान्‌इत्यपेक्षायामाहदुष्टमतमितिदुष्टमतंयुक्तिवि
रुद्धंनिरस्यदूषयाणेननदूरीकृत्य२अथस्ववर्णपूर्वकंसंज्ञातंत्रमाहपद्मांवेषति ततानंतरंदैवज्ञात्‌
पद्मावपापद्मानाम्नीयाअंबामातातपेत्यर्थः श्रीनीलकंठः पांडित्यादिशोभायुतोनीलकंठपुत्रः
असाविप्रसूताः कथंभूतः विपश्चित्‌पण्डिताः श्रुतिशास्त्रनिष्टः वेदशास्त्रसंपन्नाः संज्ञाविवेकं

सतुष्टयेजातकपद्धतिंचन्यरूपयदुष्टमतंनिरस्य२ पद्मांवयासावितनोविप
श्चिच्छ्रीनीलकंठः श्रुतिशास्त्रनिष्टः विद्वच्छिवंप्रीतिकरव्यधात्तंसंज्ञाविवेकं
सहमावतंसं३

संज्ञाविचारग्रंथंव्यधात्‌कृतवान्‌कथंभूतंसहमावतंसंसहमनिरूपकशास्त्रमव
तंसः अत्रग्रंथेसहमविचारंसम्यङ्‌निरूपितवान्‌पुनः कः विद्वच्छिवश्रीतिकरंपंडितशिवस्यप्रीतिर
न्‌॥ इतिश्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचितेश्रीनीलकंठज्योतिर्वित्‌कृतंसंज्ञातंत्रेस
हमाध्यायस्यव्याख्योदाहृतिः समाप्ताः॥ अकौरविश्वनाथेनसंज्ञातंत्रप्रकाशिकाटीकाटीकाकृति
कुर्यात्‌सज्ज्ञालज्ज्ञानुवंधनं१चंद्रवाणशरब्धद्र१५५१संमितेहायचेनवतिशालवाहनेमार्गशीर्ष
सितपंचमीतिथौविश्वनाथविदुषासमापितं॥२॥ इतिश्रीनीलकंठताजिकटीकासोदाहरणासमाप्तं १३२

मतबअ़ हिन्दू प्रेस देहली में बहुत शुद्धता

# प्रथम तंत्र समाप्तम्

से लाला प्यारेलाल के एहत्माम से छापागया शुभम्भूयात्

श्रीगणेशायनमः यत्पादपद्मं सुरसिद्धदैत्या अभीष्टसिद्ध्यै प्रणमंति नित्यं तं विघ्नराजं मनसा स्मरामि
भक्तप्रियं नागमुखं गणेशं गोदावरीतटे भांति गोलग्रामो ऽतिसुंदरः तत्रावसत्पूर्वजा मे सिद्धांतांबुजभाव
नः २ अनेकविधाकुशलैर्द्विजेंद्रैः संसेवितो भूमितले प्रसिद्धः दिवाकरो दैवविदां वरिष्ठो वेदांतशास्त्रा
भिरुचिर्बभूव ३ तस्यात्मजाः पंच गुणैरुपेताः जाता आसीष्टा प्रथमस्तु कृष्णः दैवज्ञवर्यः सकलागम
ज्ञो विश्वेशपादाब्जरतो नितांतं ४ तस्यानुजो ख्यातशिरोमणीतायो विष्णुमल्लारिसेवधो ऽथ विष्वांत्रि
स्कधपारंगमल्लो श्रीकेशवस्याग्रजनी प्रसिद्धो ५ तस्यानुजो गणितविद्गुणैर्नाग्रगण्यो मल्लारसेवन

श्रीगणेशायनमः स्वस्वाभिलाषं न हि लुब्धमीशा निर्विघ्नमीशानमुखाः सुरे
घाः विना प्रसादं किल यस्य नौमि तं ढुंढिराजं मतिलाभहेतुं १॥

समुष्णास्त्रपण्यः सच्छा
स्त्रबुद्धिसुहृदां च महाशरण्यः श्रीविश्वनाथगणकः सुतरां चकास्ति ६ आसीन्नाम्नानीलकंठो द्विजा
ग्र्यो ज्योतिः सिंधोः यारदृग्भाष्यवेत्ता तेनोद्दिष्टे वर्षतंत्रे करोमि टीकां सम्यक् विश्वनाथो विविच्य
७ तंत्रग्रंथारंभे प्रारिप्सितिनिर्विघ्नसमाप्त्यर्थं कृतमंगलं शिष्याये निवघ्नति स्वस्वेति अहं नीलकंठस्तुं
ढुंढिराजं नौमि नमस्करोमि कथंभूतं मितिलाभहेतुं मतिबुद्धिस्तस्या लाभः प्राप्तिस्तत्र हेतुं कारणं तं कं
यस्य ढुंढिराजस्य प्रसादमनुग्रहं विना ईशानमुखाः सुरौघाः ईशानो महादेवस्तत्प्रमुखाः सुरौघा देवसमू
हाः निर्विघ्नं यथा स्यात्तथा स्वस्वाभिलाषं स्वीयस्वीयमनोरथं लब्धुमीशाः समर्थाः हि निश्चयेन भवंति २

किलेति निश्चयेन श्रुत्यासौ श्रूयते अतोगणेशस्तुति एवश्लोकी १ ॥ तत्रप्रथमंसप्रयोजनंतदारंभं प्रतिजानीतेजातकेति ततस्मात्कारणात् अब्दाफलं वर्षीय शुभाशुभंफलं आदिताजिकात् प्रथमताजिकग्रंथात् जात्यभिप्रायेणैकबचनंपूर्वपूर्वताजिकग्रंथेभ्यइत्यर्थः ब्रुवेवदामि तस्मात्कस्मात् यतोयतोयस्मात्कारणात् जातकशास्त्रोक्तदशा शुभाशुभफलंनराणां मनुष्याणांस्थूल

जातकोदितदशाफलंचयत्स्थूलकालफलदंस्फुटंनृणां तत्रनस्फुरतिदैववविन्मतिस्तद्ब्रुवेऽब्दफलमादिताजकात् २ गताः समाः पादयुताः प्रकृतिघ्नसमागणात् खवेदाप्तघटीयुक्ताज्जन्मवारादिसंयुताः ३ अब्दप्रवेशोवारादिसप्ततष्टेत्रनिर्दिशेत् शिवघ्नोब्दः खखाङ्कीदुलवाब्यः खाग्निभोयितः ४॥

कालफलदंस्थूलकालेन बर्षाधिककालेनोत्सर्गतः फलंददाति इतिस्फुटं यतस्तत्रग्रहाणामायुर्दात्मकदशाः वर्षसमूहात्मकागणिते नागच्छंतितंत्र तस्मिन् फलेदैववविन्मतिः दैवज्ञानांबुद्धिः नस्फुरति कस्मिन् समये किंफलंभवति सूक्ष्मविचारे बुद्धिः स्फुटानभवति अतो वर्षमध्ये फलेज्ञानार्थमिदंवदामीत्यर्थः २ गताःसमा इत्यादिपंचश्लोकाः संज्ञातंत्रटीकायांव्याख्याताः ॥३॥४॥५॥

अथश्लोकत्रयेण प्रतिज्ञातं वर्षेश्वरनिर्णयमाह जन्मेतिवलियइतिदृगादिसाम्येइतिजन्मकालेयल्लग्नं
तस्यस्वामी अब्दलग्नपः वर्षप्रवेशकालकलग्नस्वामीमुथहाधिपः मुथहावक्ष्यमाणातस्याः स्वा
मीइदंएतस्नंतरं त्रिराशिपः संज्ञातन्त्रोक्तत्रैराशिकस्वामी ततः अन्हिदिवसेवर्षप्रवेशेसतिसूर्य

जन्मतिथ्यान्वितस्तत्रतिथावब्दप्रवेशनंतत्कालेर्कोजन्मकालरविणा
स्याद्यतः सम: ५ एकैकराशिवृध्याचेत्तुल्यांशाद्यैर्यदारविः तदामा
सप्रवेशोध्युप्रवेशश्चेत्कलासमः ६ तत्कालिकास्तुखचराः सुधिया
विधेयाः स्पष्टाविलग्नमुखभावगणोविधेयः वीर्यंतियोक्तविधिना
निखिलाग्रहाणामब्दाधिपस्यविधयेकथयामि ७ सिद्धिंप्रश्नाप्रभा
गद्यंशारलब्धंस्फुटेंतिहाप्रश्नागाद्धायानफलेतुयेंशोल्ललग्नयोभवेत् ८

राशिपतिः सूर्याधिष्टितराशिस्वामीनिशि रात्रौ वर्षप्रवेशेसति चन्द्रभाधीश्वरः चन्द्राक्रांतिरा
शिस्वामी इदंपंचकं विमृश्यविचार्यएषां पचानां मध्येयस्कतरस्तनुं पश्यति वर्षप्रवेशकाल
लग्नंईक्षमाणः पश्यन्बलीपंचवर्गीबलाधिकः सग्रहः पंचान्यतमः

वर्षस्वामी वर्षलग्नमनीक्षमाणः अपश्यन्बलाधिकोपिनैव वर्षेश्वरः बलस्यतुल्यत्वेदृष्ट्यतिरेकतः
दृष्ट्याधिक्यादब्दयोभवति एवमित्याद्याः पुरातनाः आचार्याः विदुः आह दृगादिसाम्येदृष्टिः आदि
पदाद्बलमनयोः समतायां अथवानिर्बलत्वे पंचानांलग्नदर्शित्वेपिपंच विंशोपकोनं पंचवर्गीय

जन्मलग्नपतिरब्दलग्नयोमुथहाधिपइतस्त्रिराशिपः सूर्यराशिपतिर
न्हिचन्द्रमाधीश्वरोनिशिविमृश्यपंचकं ६ बलीयएषांतनुमीक्षमाणः
सवर्षपोलग्नमनीक्ष्यमाणः नैवाब्दपोदृष्ट्यतिरेकतः स्यात् बलस्यसाम्ये
विदुरेवमाद्या १० दृगादिसाम्येप्यथवानिर्बलत्वेवर्षाधिपः स्यान्मुथहेश्व
रस्तुपंचापिनोचेत्तनुमीक्ष्यमाणवीर्याधिकोब्दस्यविभुर्विचिंत्यः ११
बलादिसाम्येरविराशियोन्हिनिशींदुराशीडितिकेचिदाहुः ॥ ॥

लबतायां उभयेत्रमुथहा स्वाम्येववर्षेश्वरोभवतिचेद्यदिपंचाधिकारिणोग्रहाः अपवर्ष लग्नेक्षमा
णाः पश्यंतो नभवंति तदेषां मध्येयोबलाधिकः सएव वर्षस्यविभुः स्वामीविचारणीयः बलयोः सा
म्येमुथहेश्वरएवेति ज्ञेयं १० अथमतांतरं चन्द्रस्यवर्षेश्वरत्वं

भावनायां विशेषं चाह बलेति पंचाधिकारिग्रहान्यतमयोर्बलदृष्ट्योः समतायां अन्हि दिवसे वर्षप्र
वेशे सति सूर्याक्रांतिराशिस्वामी अतिमधिकारी ग्रहो वर्षस्य स्वामी निशि रात्रौ वर्षप्रवेशे सति इंदुरा
शीट् चंद्राक्रांतिराशिस्वामी अंतमाधिकारी ग्रहो वर्षस्य स्वामी भवति एवं केचिदाचार्याः आहुः पू
र्वोक्तप्रकारावगतो वर्षस्वामी चंद्रो येन ग्रहेण सप्तान्यतरेणइत्थशालः मुथशिलकारी ग्रहो वर्षश्च
नेन ग्रह मुथशिलकारी चेत्तदा तद्ग्रहाणां मध्ये यो बलाधिकः बलसाम्ये मुथहेश्वर इति सुधियोज्यं

येनेत्थशालोब्दविभुः शशी सर्वषाधिपश्चंद्रभयोन्यथात्वे १२ अब्दाधियोव्ययषड
ष्टभिन्नसंस्थोलब्धोदयो ब्जनुषोः सदृशो बलेननिः शेषमुत्तमफलं विदधाति का
यैनैरुज्यराज्यबललब्धिरतीवसौख्यं १३॥

चंद्रस्य मुथशिलाभावे निर्णयमाह चंद्रभय इति
अन्यथात्वे चंद्रस्य मुथिशिलाभावे सति चंद्राक्रांतिराशिस्वामी वर्षेश्वरो भवति अनेन प्रकारेण कर्क
स्थे चंद्रमसि चंद्र एव वर्षेश्वरो नान्य इति ज्ञेयं अथ वर्षेश्वरस्थितिवशेन फलमाह अब्दाधिप इति अ
ब्दाधिपो वर्षस्वामी ग्रहः व्ययषडष्टमभिन्नस्थः द्वादशषष्ठाष्टमस्थानव्यतिरिक्तस्थानस्थितः य
द्यपि लग्नदर्शीत्वेन वर्षस्वाम्युक्ते वर्षस्वामी षष्ठाष्टमद्वादशस्थानेष्वनवस्थित एवेति वक्तुमनुचितं
तदतिरिक्तस्थाने स्थ इति तथापि पंचापि चेन्नो तनुमिक्षमाणा इत्यादिप्रकारेषष्ठाष्टमद्वादशस्थानस्थि

तस्यापिवर्षेश्वरत्वसंभवः राशिकुंडल्यांदृष्टिसद्भावेनतत्रलग्नदृष्टुर्वर्षेश्वरस्यभावकुंडल्यांतत्स्था
नास्यतत्वसंभावनायाः ब्रह्मणोप्यनिर्वीर्यत्वाच्चलब्धोदयः वर्षप्रवेशकालेजन्मोदयोर्लग्नइत्य
र्थः अब्दजनुषोवर्षजन्मकालयोः वलेनपंचवर्गीवलेनसदृशस्तुल्यः अहनिवलइत्यर्थः एतादृ
शोवर्षेश्वरः निःशेषंसमग्रंउत्तमफलंकरोतितदेवाहकायत्यादिस्पष्टं१२७ अथवर्षेश्वरफलंपंच
वर्गीफलानुरोधाद्भवतीत्याहवलेतिवर्षस्वामिनिवलेपंचवर्गीवलेपूर्वेणपूर्णेसतिशुभफलंपूर्णं

वलेपूर्णेल्पेपूर्णंशुभंमधेचमध्यमंअधमेदुःखशोकारिभयानिविविधाःश्च॥
१४ सूर्येब्दयेवलिनिराजेसुखात्मजार्थलाभःकुलोचितविभुःपरिवारसौख्यंपुष्टं
यशोग्रहसुखंविविधाप्रतिष्टाशत्रुर्विनश्यतिफलंजनखेटयुक्त्या॥ १५॥ १५॥

भवतिमध्यवलेशुभमध्यंभवतिअधमेहीनवलेदुःखरोगादित्यादिस्पष्टं अथवर्षेश्वरस्यसूर्यचल
पूर्णतायांफलमाहसूर्येब्दयइतिविनश्यतित्यंतंषष्टंफलमितिइदमुक्तंफलंजनिखेटयुक्त्याजन्म
कालग्रहविचारेणवाच्यंएतदुक्तंभवतिवर्षेश्वरग्रहोजन्मकालेउत्तमवलश्चेत् अत्राप्युत्तमव
लस्तदोत्तमोतमंमध्यवलश्चेदुत्तमंअधमवलश्चेन्मध्यमंजन्मकालेमध्यमवलश्चेत् क्रमेणो
त्तमामध्यमाधमंभवति जन्मकाले हीनवलश्चेत् क्रमेणमध्यमाधमा भवन्ति ॥ १४॥ ७

अथ वर्षेश्वरार्कस्य मध्यबलत्वे फलमाह मध्ये इति इदं उक्तमबलसंबंधि फलं प्रागुक्तं समग्रं मध्यमं भवति स्वल्पमित्यादि नृपादित्यं तस्यष्टं अनिष्ट फलं न दास्याद्यदाशुभेन ग्रहेण वर्षेश्वरस्य मुथशिलो न स्या दर्थाच्छुभग्रहामुथुशिले अनिष्टं न स्यादित्यपवाद उक्तः २५ हीनबलार्कस्य फलमाह सूर्येति स्पष्टं २६ अथयेनेत्थशालो विधुरिति दास्यार्थं पुनर्वदस्तद्वर्षेश्वरस्य कंबूलयोगे रात्रिजन्मनो वर्षमुक्त

मध्येरवौफलमिदं निखलं नु मध्यं सुल्पं सुखं स्वजनतोपि विवादमाहुः स्था नच्युतिर्नचसुखं क्रशता शरीरे भीतिर्नृपान्मुथशिलो न शुभेन चेत्स्यात् २६ सूर्ये बलेन रहिते वृपतौ विदेशयानं धनक्षयश्च चोरिभयं च तंद्रालोकापवा दमयमुग्ररुजोतिदुःखं पित्रादितोपि न सुखं सुतमित्रभीतिः २७ चंद्रवृत्ययमु थशिलपेनासावब्दपोस्य चेत् कंबूलमिंदुनां जन्म निशि वर्षं तदोत्तमं २८ वीर्यान्विते शशिनि वित्तकलत्रपुत्रमित्रालयस्य विविधं सुखमाहुरार्याः ५ स्रग्गंधमौक्तिककदूकूलसुखानि भूतिलाभः कुलोचितपदस्य नृपैः सखित्वं

मंतदित्याह चंद्रेति चंद्रवृत्ये सति येन ग्रहेण चंद्रो मुथशिलः असौ वर्षेश्वरः अस्य वर्षेश्वरस्य चंद्रेण कंबूल चन्द्रातिरिक्ता ग्रहेण मुथशिल मित्यर्थः रात्रौ जन्म तदा वर्ष मुत्तमं ज्ञेयमित्यर्थः अस्य चंद्रस्य पूर्णबलस्य फलमाह वीयान्वितेति स्पष्टम् २९

अथचंद्रस्य मध्यम वलस्य फलमाह वर्षाधिपे इत्यंतं स्पष्टं यद्यपि पापग्रहेण इत्तसाफ योगश्चंद्रस्य स्यात्तदा
श्लेष्मयोनिः २० अथ नष्टात्निहनि वलस्य चंद्रस्य फलमाह नष्टे इति सूर्याक्रांतत्वेनास्तंगते उत्तरार्द्धे हीन
वलस्य फलं २१ अथ भौमस्य वलपूर्णस्य फलमाह भौम इति स्पष्टं २३ अथ भौमस्य मध्यवलस्य फल

वर्षाधिपे शशिनि मध्यवले फलानि मध्यान्यमूनि रिपुता सुत मित्र वर्गेः स्था
नांतरे गति रथोक्त भ्राता शरीरे श्लेषोद्भवश्च यदि पापकृते सराफः २० नष्टेव्द
पे शशिनि शीतकफादिरोगश्चौर्यादिभिः स्वजनविग्रहमप्युशंति दूरेगतिः
सुत कलत्र सुखात्ययश्च स्यांत्तुल्य मृत्युः मतिहीनवले शशांके २१ अथ
भौमः भौमेव्दपे वलिनि कीर्तिजयारिनाशो सेनापतित्व रणनायकताप्रदि
ष्टालाभः कुलोचित धनस्य नमस्यता च लोकेषु मित्र सुत वित्त कलत्र सौ
ख्यम् २२ मध्ये व्दपे वनिसुते रुधिरस्त्रुतिश्च कोपाधिको भुकट शस्त्र हतिर्दि
तानि स्वामित्व मात्मगणतो वलगौरवं च मध्यं सुखं निखिलमुक्त फलं वि
चिंत्यं २३ हीनेव्दपे सृजि भयं रिपुतस्करागिनृलोकापवादभयमात्माधि
यादिनाशः कायास्यि विघ्न मति रोग भयादि देशयानंदा॥ माहनघ्येतिस्पष्टं २३ अथ
भौमस्य हीनवलस्य फलमाह हीने इति असृजि भौमे वर्षेशे हीनवलं सति भयमित्यादि प्रायानमि

रामचन्द्रः॥

ता॰
टी॰
१०

गुरुदृष्टिहीने भौमे सति अयनयत अनीतितः क्षयनाशः २४ अथोत्तमवलिनो बुधस्य फलमाह सौ
म्ये इति स्फुटार्थं २५ अथ मध्यबुधस्य फलमाह अब्दाधिपे एतत् इति प्रागुक्तं सर्वं मध्यं स्यात् शुभग्रहसु

योयनयतोगुरुदृष्ट्यभावे २४ अथबुधः सौम्येब्दपेवलवतिप्रतिवादलेख्यसच्छास्त्रस
द्व्यवहृतोविजयोर्थलाभः ज्ञानंकलागणितवैद्यमवद्गुरुत्वंराजाश्रयेणनृपतान्नप
मंत्रितावा २५ अब्दाधिपेशशिसुतेखलुमध्यवीर्येस्यान्मध्यमंनिखलमेतदथाब्दयानं
वाणिज्यवर्तनमथात्मजमित्रसौख्यंसौम्येत्यशालवशतोपरथानसम्यक् २६ सौम्येब्द
येधमवलेवलवुद्धिहानिर्द्धर्मक्षयः परिभवोनिजवाक्यदोषात् विक्षेपतोविपदतीव
मृषैवसाख्यंहानिः परिव्यवहृतेः सुतवित्तमित्रैः २७ अथगुरुः जीवेब्दपेवलयुतेपरि
वारसौख्यंधर्मोगुणाग्रहलताधनकीर्तिपुत्राः विश्वास्यताजगतिसन्मतिविक्रमाप्ति
लाभौनिधेर्नृपतिगौरवमप्यरिघ्नं २८॥ यच्छिलानुरोधतः आत्मजमित्रयोः सुखंभवतिपर
या अशुभग्रहेसरापेनतयोः सम्यक् शुभंनस्यात् २६ अथहीनवलस्यबुधस्यफलमाह सौम्येइ
ति स्पष्टार्थं २७ अथ गुरोरुत्तम वलिनो वर्षेश्वरस्य फलमाह जीवे इति स्पष्टम् ॥२८॥ १०

मध्यवलिनस्तस्य फलमाह अब्दाधिपे इति इदं प्रागुक्तं फलमध्यमं अशुभग्रहे एसराफे सति दा रिद्र्यमित्यादि श्लोकांतं फलं शेषं स्पष्टं २९ हीनस्य तस्य फलमाह जीवे इति स्पष्टं ३० अथ शुक्रस्यो त्तमवलिनो वर्षेशस्य फलमाह शुक्रे इति स्पष्टं ३१ मध्यवलस्य फलमाह अब्दाधिपे इति पापग्रहो

अब्दाधिपे सुरगुरौ किल मध्यवीर्ये स्यान्मध्यमं फलमिदं नृपसंगमश्च विज्ञानशास्त्र परतात्प्यशुभे सराफे दारिद्र्यमर्थविलयश्च कलत्रपीडा २९ जीवे त्वधमवले धन धर्मसौख्यहानिस्तयजंति सुतपितृजना: सभार्या: लोकापवादभयमाकुलतातिक ष्टं वृत्तिस्तनौ कफरुजो रिपुभीकलिश्च ३० अथ शुक्र: शुक्रे त्वव्ये वलिनि निर्नीरुजता विलासच्छास्त्ररत्नमधुराशनभोगतोषा: क्षेमप्रतापविजयावनिताविलासोहास्यं नृपाश्रयवशेन धनं सुखं च ३१ अब्दाधिपे भृगुसुते खलु मध्यवीर्ये स्यान्मध्यमं निखि लमेतदथाल्पवृत्ति: गुप्तं च दु:खमखिलं सुनिबद्धवृत्ति: पापारिवीक्षितयुते विपरीतनाश: ॥३२॥

य: शत्रुस्तेन दृष्टे युते वा शुक्रे विपरीतार्थनाश इति अत्र वीक्षितयुते इत्युक्त्या राशिकुंडल्यां दृष्टिर्विलोक्याभावकुंडलयां संयुक्तत्वं दृष्टव्यमिति स्पष्टी कृतं अन्यथा ताजिकशास्त्रे प्रथमस्थाने दृष्टसक्ते वीक्षिते इत्यनेन युतिसिद्धौ युते इत्यस्य वैयर्थ्यापते: शेषं स्पष्टं ३२

अथहीनबलस्य फलमाह शुक्रे इति स्पष्टं ३३ अथोत्तमबलिनः शनिर्बर्षेशस्य फलमाह मंदे इति स्पष्टं
३३ मध्यबलिनः स्तस्य फलमाह अब्दाधिपे इति पापग्रह योगेन दृष्ट्या वा पापं फलं दुष्टं फलं स्यात् यो
गोभावः कुंडल्यां द्रष्टव्य मित्याग्रहार्थं युगुक्तिः शेषं स्पष्टं ३५ हीन बलिनः शनिर्वर्षेशस्य

शुक्रे ब्देपे धमबले मनसोऽतिनाषः लोकोपहासविवदो निजवृत्तिनाशः दे
षः कलत्रसुतमित्रजनेषु कष्टाद्दन्नाशनं च विफलं क्रियते न सौख्यं ३३ अ
थ शनिः मंदेब्दपे बलिनि नूतनभूमिवेश्मक्षेत्राप्तिरर्थनिचयाय वनावनी
शात् आरामनिर्मिनजलाशयसौख्यमंगपुष्टिः कुलोचितपदाप्तिगुणाग्र
णीत्वं ३४ अब्दाधिपे रविसुते खलु मध्यवीर्ये स्यान्मध्यमं निखिलमन्यभुज
सुकष्टात् दासाब्दमाहिषकुलान्यरतस्तु लाभः पापं फलं भवति पापयुगी
क्षणेन ३५ मंदे बलेन रहिते ब्दतो क्रियाणां वध्यत्वमर्थविलयो विपदो रिभीतिः
स्त्रीपुत्रमित्रजनवैरकदन्नभुक्तिः सौम्येत्थशालयुजि सौख्यमपीषदाहः ॥३६॥

फलमाह मंदे इति सौम्यत्थशालयुजि शुभग्रह मुथशिले शुभग्रहे योगे वा ईषत् किंचित् वर्षे १२
सौख्यमपि भवत शेषं स्पष्टम् ३६

वर्षेश्वर इति योग्रहोवर्षेश्वरोभवति सग्रहः संपूर्णेवर्षेदशाधिपः ज्ञेयः तद्वर्षे संपूर्णांतस्यदेशोत्य र्थः अस्यवर्षेशस्यवर्षजन्मकालयोः वलंपंचवर्गीवलंचित्यंविचार्यं उत्तममध्यमादिभेदेन वीर्यान्वितो उभयत्र वलिष्टेसतिवर्षे अनिष्टफलत्वं समत्वेजन्मनि वीर्यान्वितेवर्षेमध्यवलेही नवलेवाजन्मनिमध्यवलेहीनवलेवावर्षेवीर्यान्वितेजन्मनिमध्यवलेवर्षेहीनवल इत्यादौतार

वर्षेश्वरोभवतियः सदशाधिपोब्दे ज्ञेयोखिलोब्दजनुषोवलमस्यचिंत्यं वीर्यान्वितेत्रनिखिलंशुभमब्दमाहुः हीनेत्वनिष्टफलतासमतासमत्वे ३७ येनेत्थशालोब्दपतेर्ग्रहोसौ स्वीयस्वभावात्सुफलंददातिशुभेसराफे शुभमस्तिकिंचिदनिष्टमेवाशुभमूसरिफ्के ३८ हद्दयाहशियः खेटआधत्ते ब्दपयोग्रहः जन्मन्यब्देचताद्दकोत्तदात्मफलत्वसौ ॥ ३८ ॥ ३९ ॥

तस्मिउत्तमाधमपदफलापेक्षयावर्षेमध्यमफलदाता ३७ येनेतिवर्षेश्वरस्ययेनग्रहेणमुथशिलः असौमुथशिलकारीग्रहः स्वीयस्वभावात् आत्मीयप्रणउक्तसत्त्वात्तत्रोक्तस्वरूपेवशात् सुफलंशुभ फलंददाति शुभग्रहकृतेसराफेसति वर्षेकिंचित् सुखंवर्तते शुभग्रहकृतेसराफेसति अनिष्टमे वमेवअशुभफलमेवभवति ३८ हेद्देतियः वर्षस्वामीग्रहः याद्दशोमित्रशत्रुग्रहसंबंधिनिहद्देहद्दा ऽभवति अत्र अस्मिन् मित्रशत्रुग्रहेअत्रवर्षेश्वरोइतिकेचित् योग्रहः चकारान्मित्रशत्रुहद्दाणामहः उ

रीभवति जन्मकालेवर्षप्रवेशकालेपिताहृक्उक्तप्रकारसदृशः असौवर्षेग्रहः तदानदानींआत्मफल
दःशुभाशुभदातास्यात् ३९ इति ४० व्यत्यासेजन्मनियोग्रहः स्वभावजंदातुकर्तुंविभुः समर्थः स्वभावंपश्य
न्निधिष्टोवाअस्यग्रहस्ययदिअब्दलग्नाब्दभवः वर्षलग्नस्वामीवर्षस्वामिरुत्पन्नः मूशरिफः ईशराफयोग
स्यातर्हितस्मिन्वर्षेतत्फलंजन्मकालीन्भावोत्पन्नफलेनंतत्फलनाशोभवतीत्यर्थः व्यत्यासेईसराफाभा
वेफलंजन्मकालकंभावजंफलआदेश्यंकथनीयं इत्थशालेमुथशिलेसति विशेषतः अत्यंतंतत्फलं

योजन्मनिफलंदातुंविभुंमूसरिफोस्यचेत् अब्दलग्नाब्दय भवस्तस्मिन्नब्देनतत्फ
लं ४० व्यत्यासेफलमादेश्यमित्थशालेविशेषतः नोभयंचत्तदाप्यस्तिजन्माश्रयमि
तिस्फुटं ४१ उदाहरणमपुत्राधिपोजन्मनिपुत्रभावंपश्यन्सुतंदातुमसौसमर्थः

स्यात् उभयंईसराफमुथशिलौनस्यातांयदि तथापिजन्माश्रयंजन्मकालीनभावजं फलंअस्तिभव
ति इतिस्फुटंवाधकाभावा तत्फलंकेन निवर्णीयमित्यर्थः यद्यपि व्यत्यासेफलमादेश्यमित्यनेनपि
यौनरुक्त्यं तथापि तत् स्पष्टत्वार्थमिदमुक्तं अन्ययोक्तात्रिष्वक तरेवेप्यर्थमपते: वस्कतस्तग्रंथक्र
नोत्रप्रमाणः ४१ प्रथम श्लोकएफटार्थवोधायोदाहरति पुत्राधिपइति जन्मनिजन्मकालेपुत्रा
धिपः पंचमभावस्वामी पुत्रभावंपंचम भावंपश्यन्नसौख्यंपुत्रस्वामीग्रहः पुत्रफलंदातुसमर्थः

शक्तः सः फलदाता ग्रहवर्षे यत्रकुत्रापि वस्थितः वर्षेशोने सराफी अतः इहास्मिन् वर्षे पुत्रस्यनाशो
भवतिएवमन्यभावेपि वर्षलग्नेशो सराफेनाप्यु दाहार्यं ४२ हद्देयाह यीत्यादि मोदाहरणं स्पष्टयति
अब्देश्वर इति वर्षेश्वरोवर्षे अमूहक अमुंगुरुं वृहस्पतिः जन्मनि स्वमित्रस्य हद्दांशे तस्मिन्मित्रह
द्दा चंद्रस्य ः महः उक्तं तेजः अधात् धारयति मुथशिलकारीत्यर्थः असौ अमूहक अयमर्थः स्वमि

वर्षेप्रायत्राब्दस्यमूसरिष्फीपुत्रस्यनाशोभवतीतिवर्षे ४२ अब्देश्वरोगुरुर्मित्रहद्देमि
त्रहद्दाधाशीमहोत्रादादमूहक्स वर्षेव्दस्तेन शोभनः ४३ एवमुन्नेयमन्यच्च शुभाशुभ
फलं बुधैः वलावलविवेकेन योगत्रविमर्षतः ४४ ॥ इत्यब्दफलाध्यायः ॥

त्रादिहद्दास्थितो गुरोर्यदिचंद्रः मुथशिलद्वारामहः धारयते सवर्षेश्वरः तेनकारणेन अब्दः वर्ष का
लः शुभः केचितु अब्देश्वर इतितु योगांतरं अमूहद्दत्यस्यार्थस्तु अमुंचंद्रं पश्यतीति तन्नउदाहरणं
प्रकरणे पठित्वेन योगांतरा संभवात् मूलवाक्याभावाच्च ४३ उपसंहरति एवमिति अनयोक्तरीत्या अ
न्यत् शुभाशुभफलं वलावलविवेचनेन योगत्रय विमर्शनतः मुथशिलकंवूले सराफेतियोगत्रयाणां
विचारेणावधेर्ज्ञेयं ४४ ॥ इतिदिवाकर विरचितायांवर्षफलाध्यायः ॥

ता०
टी०
१५०
२६
१५

अथमुत्थहाफलार्थंमुथहानयनमाहस्वजन्मलग्नादितिसंज्ञातंतव्याख्यायांस्पष्टंयप्रश्नस्याउपप
त्याग्रहवद्गतिरस्तिइत्याहप्रत्यहमितिप्रतिसौरदिनंसामुथाअनुयातत: षष्ट्याधिकशतत्रयसौ
रांशैरेकराशिकलास्तदैकसौरदिनेनैका इत्यनुपात्यंताश्चकलाभिर्वर्द्धतेअनयारीत्यामौरपा

अथमुथहानिरूपणंस्वजन्मलग्नात्प्रतिवर्षमेकैकराशिभोगान्मुथहाभ्र
मेणस्वजन्मलग्नंरवितष्टयातंशरन्ध्रयुतंसाभमुखेन्थिहास्यात् ४५ प्रत्यहमा
रलिप्ताभिर्वर्द्धतेसानुपाततः सार्द्धंमशाद्वयंमासेइत्याहुःकेपिसूरय: ४६।
स्वामिसौम्येक्षणात्सौख्यंमृतदृष्ट्याभयंरुज: भावालोकनिसंयोगात्फलं
मस्यानिरूपते ४७ वर्षलग्नात्सुखांस्तांत्यारिपुरध्रेष्वशोभनापुण्यकर्माय
गास्वाम्यदृत्तेन्यबोधमाद्धनम् ॥४८॥

सिसार्द्धांशशातद्वयंवर्द्धतेकइत्येवंकेपिपंडिता: वंदतिस्वमते पूर्वग्रंथमध्येमुथाचलनाउक्ते
वर्षेतिएवाग्रिमराशावुड्डीयगच्छतीतियावद्वचनंनहिवाचनिकमितिन्यायात्तत्त्वमंगीकृतं ४६॥
स्वामिसौम्येतिस्वामिशुभग्रहदर्शनात्सुखंमृतदृष्ट्यारुज: भयंचअस्या: मुथहाया: फलंभावालो
कनसंयोगात् निरूप्यते॥४७॥वर्षलग्नादितिस्पष्टम् ४८

शत्रुक्षयमित्यादिमुथाभावफलश्लोकाः द्वादशस्पष्टाः ॥ ५८ ॥

शत्रुक्षयंमानसुतार्थलाभंप्रतापवृद्धिर्नृपतेःप्रसादंशरीरपुष्टंविविधोद्यमाश्च
ददातिवित्तंमुथहातनुस्थाः ४९ उत्साहतोर्थागमनंयशश्चस्वबंधुसन्मानन
पार्श्वपार्श्वमिष्टान्नभोगोबलपुष्टिसौख्यंस्याद्धर्थभावेमुथहापदादे ५०
पराक्रमाद्वीनपशः सुखानिसौख्यंद्विजदेवपूजासर्वोपकारस्तनुपुष्टिकीर्त्ति
न्नृपाश्रयश्चेपेन्मुथहातृतीयाः ५१ शरीरपीडारिपुभीः स्ववर्गवैरंमनस्ताप
निरुद्यमत्वंस्यान्मुथहाहायांसुखभावगायांजनापवादामयवृद्धिदुःखं ५२
यदीयिहापंचमगावेशोसुहृद्धिसौख्यात्मजवित्तलाभः प्रतापवृद्धिर्विव
धाविलासाद्देवद्विजार्चानृपतेः ५३ क्षतत्वमंगेषुरिपुदयश्चभयंरुजस्त
स्करतोनृपाद्वाकार्य्यार्थनाशोमुथहारिगाचेतदुर्बुद्धिवृद्धिः स्वकृतानुता
पः ५४ कलत्रवंधुव्यसनारिभीतिरुत्साहभंगोधनधर्म्मनाशः धूनोपगान्वेन्मु
थहातनौ ; स्यातरुजामनोमोहविरुद्धचेष्टा ५५ मयंरिपोस्तस्करतोविनाशोध
मार्थयोर्दुव्यसनामयश्चमत्युस्थिताचेन्मुथहानरोपणांबलक्षयः स्याद्गमनंसुहृदे

ता॰
टी॰
१८
/८

क्रूरैरिति नुतदृष्टा अशुभदृष्टा पापग्रहैर्दृष्टो यस्तन्वादिभावः अत्र आसेन्न्यादेयदि मुथहा भवतित
दानद्भाववर्गं मुथहाधिष्ठितभावस्थितं शुभं फलं नश्येत् तद्भावसंबंध्यशुभफलं च वर्द्धते अस्याः फल
माह शुभं अतिसावीर्ययुक्तां मुथाभावजं स्वाधिष्ठतभावसंबंधिशुभफलं पोषयेत् अशुभं फलं तद्भाव

स्वामित्वमाघेपिगमो ह्ययेभ्यो धर्मोत्सवः पुत्रकलत्रसौख्यं देवद्विजार्चापरमं पशंश्च भा
ग्योदयो भाग्यगते थिहायां ५७ नृपप्रसादं स्वजनोपकारं सत्कर्मसिद्धिं द्विजदेवमुक्तं य
शोभिवृद्धिं विघार्थलाभं दत्ते वरस्यां मुथहा पदाप्तिं प ५८ यंदीथहालाभकाविलाससौ
भाग्यं नैरुज्यमनः प्रसादः भवंति राज्याश्रयतो धनानि सन्मित्रपुत्राभिमताप्तयश्च
५९ व्ययोधिको दुष्टजनैश्च संगो रुजाततौ विक्रमत्तीर्थसिद्धिः धर्मार्थहानिर्मुथ
हानिर्मुथहा व्यापस्थायदा तदास्या जनतोपि वैरम् ६० क्रूरैर्दृष्टः नुतदृष्टायो भावो मु
थहात्र चेत् शुभं तद्भावजं नश्येदशुभं वाविवर्द्धते ६१ इति मुथाभावफलं शुभस्वामियुक्ते
द्विता वीर्य पुकसैंथिहा स्वामिसौम्यद्रश्शालं प्रपन्ना शुभं भावजं पोषयन्नाशुभं सान्यया ॥

[illegible]

संबंधिनवर्धयते अन्यथा विशुभस्वामिन युक्तां भवति स्वामिसौम्येत्य शालं प्रपन्ना च न भवति पापदृष्टा
पापमुथाशिला च भवति तस्यामित्यर्थः अन्यथाभावः स्वभावसंबंधशुभफलं वर्द्धयेत् अशुभफलं तत्संबं

१९

तत्संबंधिनवर्द्धयेदिति विपरीतभावइत्यर्थः शुभाशुभदृष्टाशुभाशुभमुथशिलावतस्तावतस्ताविम्
श्युशुभाशुभग्रहावलवशाद्दित्वार्यशुभंशुभवाज्ञेयमित्यर्थः ६२॥ जनुलज इतिजन्मलग्नात्सप्त
मकाष्टशाष्टमचतुर्थस्थानस्थिनामुंथावर्षेसामुंथाप्येतपापग्रहैर्हता युक्ता तस्तावर्षेयस्मिन्भावेमुं
थासंभावः विनश्येत् एवंउक्तरूपेत्वशुभग्रहस्वामिदृष्टौसत्यांतस्यभावस्त्यनाशोनभवतिशुभंच

जनुल्लग्नएोस्तांत्यषमत्युवंधुस्थिताव्हेहेताक्रूरखेटैस्तुसाचेत्विनश्येत्स्यंत्रेनृथि
हाभगवंशुभस्वामिदृष्टौननाशः शुभंच ६३ पदोभयंत्रापिहताभावोनश्येत्श्येतस
र्वथांउभयत्रशुभत्वेतुभावोसौवर्द्धतेतरां ६४ वर्षेप्यनिष्टगेहस्थायद्भावेजनुषि
स्यताक्रूरोपघातातंभावंनाशयेच्छुभयुकशुभा ६५॥ भवति६३ यदेतियदाउभयत्रज
न्मनिजन्मनिवर्षेचअनिष्टस्थानस्थाहतापापग्रहयुक्तातदासमुंथायुक्तोभावः सर्वस्याअवश्यं
नश्येत् उभयत्रजन्मनिवर्षेचशुभत्वेशुभग्रहयुक्तात्वेअसौमुंथायुक्तोभावः यर्द्धतेतरांसुतरामति
शयेनवर्द्धते ६४ वर्षेइतिवर्षेलग्नकुंडल्याअनिष्टस्थानस्थाचतुर्थषष्टसप्तमाष्टमद्वादशास्थि
ताअपिअवा जन्मलग्नादिषुस्थानाषुस्थानेषुस्थितातदाजनुषिजन्मकुंडल्यांयस्मिन्भावेस्थिता
क्रूरोपघातातवर्षेपापग्रहसंयुक्तात्वान्तंजन्मास्थितमुथहायुक्तभावंनाशयेत् वर्षेशुभग्रहयुक्ताचशु
भफलदा॥ ६५॥

ता॰
टी॰
२०
४

उदाहरतिजनुर्लग्नतइतिजन्मलग्नाच्चतुर्थस्थानस्थितावर्षप्रवेशेकालेशुभग्रहयुक्तातदापितुर्द्रव्यस्य
उपलक्षणाच्चतुर्थभवचिंतासंबंधिफलस्येत्यर्थः लाभंकरोतिपापग्रहयुक्ताचेन्नपाङ्गंकरोतिअनि
कष्टफलदाभवति इत्थं अन्योक्तरीत्याविमर्शोविचारः अष्टमादौचतुर्थस्थानव्यतिरिक्तानिष्टस्थाने
पिविधेयः उक्तभावफलस्यलाभोनाशोवावक्तव्यः ६६ यस्मिन्नितिवर्षलग्नकुंडल्यांअसौमुथाय
स्मिनभावेअधिष्ठितासीतीस्वामिशुभग्रहाभ्यांदृष्टाएवंवर्षसंबंधिअयंभावोजन्मनिजन्मलग्नाकुंड

जनुर्लग्नतस्तुर्यगासौम्ययुक्ताब्दवेशेपितुर्द्रव्यलाभंविधित्तेनपाङ्गीतिदा
पापयुक्तानिकष्टाष्टमादावपीत्थंविमर्शोविधेयः ६६ यस्मिन्भावेस्वामिसौम्ये
क्षिताचेद्भावोजन्मन्येषयस्तस्यवृद्धिः एवंपापैर्नाशउक्तस्तुतस्येन्मूहुंवीर्याद्
वर्षपः सौख्यमेव ६७॥

ल्यांयोभावोभवतिमुंथाधिष्ठितवर्षभावस्ययोराशिर्जन्मभावकुंड
ल्यांयस्मिन्भावेभवतीत्यर्थः तस्यतद्भावसंबंधिचिंतितपदार्थस्यवृद्धिः पापग्रहैः एवंदृष्टातस्यभा
वस्यजन्मसंबंधिनः नाशः कथितः इतिरीवंज्ञेयंअस्यापवादमाह वीर्यादितिवर्षस्वामीवीर्यात्बल
वशात्सौख्यमेवकरोतिनमुन्थाकृतानिष्टफलंवर्षेप्रबलिष्टेसतिमुन्थाजनितानिष्टफलनिवर्तिभ
वतीत्यर्थः ६७॥ अथमुथहाग्रहयोगवीक्षणग्रहणभावस्थितफलंवक्तुकामः प्रथमंसूर्यस्याहयदीतिमुथ

हात्सूर्यग्रहेसिंहराशौश्रथवासूर्येणयुक्ता तदाराज्या दत्तेगुणानांपरभागंउत्कृष्टंशास्थांनांतरप्राप्तिंवद
नेदृशः सूर्यदृष्टेरपिइदंफलमुक्तं ६० भौमस्याहकुजेनेतिरुधिरप्रकोपमित्यंतस्पष्टंसौरेक्षिताशनिना
दृष्टाशनिराशौकुजयुक्तादृष्टमेंथाभवतितदापूर्वोक्तफलंविशेषादधिकत्वेनभवति ६९ चंद्रस्याह

यदींथिहासूर्यग्रहेयुताधासूर्येणराज्यंनरपंसगमंच दत्तेगुणानापरमामवाप्तिं
स्थानांतरस्येतिफलंदृशेपि ६७ चंद्रेणयुक्तेकुग्रहेयदृष्टेंदुनापिवा धर्म्मयशो
भिवृद्धिंनैरुज्यसंतोषमतिप्रवृद्धिंददातिपापेक्षणातोतिदुखम् ६९ कुजेनयु
क्ताकुजभेकुजेनदृष्ट्वाचपितोष्वस्रजंकरोतिशस्त्राभिघातंरुधिरप्रकोपंसौरी
क्षितासौरिगृहेविशेषात् ७० बुधेनशुक्रेणयुतेक्षितावानङ्गेपिवास्त्रीमतिला
भसौख्यमधर्म्मयशश्चाप्यतुल्यंविधतेकष्टंचपापेक्षणयोगतःस्यात ७१
युतेक्षितावागुरुणागुरोर्भेयदींथिंहापुत्रकलत्रसौख्यंददातिहेमांवररत्नभो
गंसुभेत्थशालादिहराज्यलभेः ७२

चंद्रेणेतिददातीत्यंतंस्पष्टं पापग्रहेदर्शनाददतिदुखं भवति ७१ बुधशुक्रयोराह बुधेनेतिविधते
इत्यंतंस्पष्टं पापग्रहदर्शनानयोगात्कष्टफलंस्यात् ७१ गुरोराहयुक्तेतिभोगमित्यंतंस्पष्टंइथपू
र्वोक्तेगुरुराशौगुरुयुक्तात्याद्दृष्टावामुथहेत्यर्थःशुभग्रहमुथशिलयोगाद्राज्यप्राप्तिः ॥ ७२ ॥ 

शनेराहुशनेरिति वार्त्तं स्पष्टं गुरुदृष्टस्य शुभफलप्राप्तिः ७३ अथ राहुमुखगतमुथहाफलमाह तमोमु
खइति स्पष्टे पदं स्थानं ७४ अथ राहोर्मुखपृष्ठपुच्छानां लक्षणं माह भोग्यभास्ते मुखसंज्ञवानथ इति यस्मिन्
राशौ राहुरस्ति तस्य वक्रगत्या ये भोग्याः लवाः भाग्यगतालवाः तेन भुक्तालवास्ते पृष्ठसंज्ञका ज्ञेया तद्य
था राहुरिदानीं कन्यायां दशभिरंशैर्वक्रोस्ति तत्रारेमादशांशाः ७५ मुखसंज्ञकाः भोगस्य करिष्यमाण

शनेर्गृहे तेन युते विलोकिता वा यदीथिहा वातरुजं विधत्ते मानक्षयं वन्हिभयं धनस्य हानिंच
जीवेक्षणतः शुभाप्तिः ७३ तमोमुखे च व्युथाहा धनाप्तिं यशः सुखं धर्मसमुन्नतिंच
सितेज्ययोगेक्षणतः पराप्तिं सुवर्णरत्नांबरलब्धयश्च ७४ भोग्या राहोर्लवास्तस्य मु
खं पृष्टं गतालवाः ततः सप्तमभं पुच्छं विमृश्येति फलं वदेत् ७५ तत्पृष्ठभागेन शुभ
प्रदास्य तत्पुच्छभागाद्रिपुभीतिकष्टं पापेक्षणार्थसुखस्य हानिश्चेज्जन्मनीत्थं गृह
वितनाशः ॥ ७६ ॥

त्वात् अन्ये भुक्ता विंशत्यंशाः पृष्ठसंज्ञकाः ततो राहुक्रांतराशेः सकाशात्सप्तमभं शशिपुच्छं यथा
कन्यायाः सप्तमो राशिमीनाख्य केत्वाक्रांतराशिः पुच्छसंज्ञकः इति विमृश्य विचार्य फलं वदेत्
७५ अथ पृष्ठपुच्छगतमुथहायाः फलमाह पृष्ठभाग इति स्पष्टार्थं पद्यं ॥७६॥

ता॰
टी॰
२३
४३

अथजन्मकालीनग्रहवशाच्छुभाशुभफलमाहजमेतिये ग्रहाजन्मकालेचलिनः तेग्रहाः अब्दका
लेवर्षकालेचेद्दुर्बलाः निर्बलास्तदातैर्ग्रहैः समंतिवर्षांतेवर्षस्योत्तरार्द्धे अशुभफलंवाच्यं अ
थाब्दर्षपूर्वार्द्धेतद्ग्रहफलंशुभं विपर्ययेजन्मकालेचेद्ग्रहाः दुर्बलास्युः वर्षकालेसबलास्तदापू
र्वं वर्षपूर्वार्द्धेफलमनिष्टमुक्तं अर्थात्तद्वर्षोत्तरार्द्धेशुभंफलंवाच्यं उभयत्रजन्मकालवर्षकालयोः

येजन्मकालेबलिनोब्दकालेचेद्दुर्बलास्तैरशुभंसमांते विपर्य्ययेपूर्वमनिष्टमु
क्तंतुल्यंफलंस्यादुभयत्रसाम्ये ७७ षष्ठेष्टमेंत्येभुवेवेंथिहेशोस्तगोथवक्रोशुभं
दृष्टयुयुक्तः क्रूराच्चतुर्थास्तगतश्चभव्योनस्याद्रुजंएच्छतिवित्तनाशं॥७८॥

साम्येतुल्यफलंस्यादेषमर्थः तेग्रहाः जन्मकालवर्षकालयोश्चेत्सबलास्तदासम्पूर्णवर्षपर्यंतंशु
भफलंस्यात उभयवापियदानिर्बलास्तदासंपूर्णवर्षपर्यंतमशुभफलंस्यात् अथाशुभंमुथहास्वा
मिफलमाह षष्टइतिचेत् मुथहेशः षष्टेष्टमेन्येद्वादशेभुविचतुर्थस्थानएषुनिष्टस्थानेषुभवति-
अथवाअस्तगतोवक्रीवातथाअशुभैः पापगृहैः दृष्टोयुक्तोवास्यात् तदाक्रूरात् क्रूरग्रहस्थाना
च्चतुर्थेअस्वेसप्तमेवागतः स्यात् तदाभव्यः शुभोनस्यात् किंवसमुथहेशोरुजंरोगंवतिनांशञ्चयच्छति

अथाम्पदाशुभंमुथहास्वामिफलमाह यदीति यदि अष्टमेशेन वर्षलग्नादष्टमस्थानाधीश्वरेणाशु
भग्रहेणपापग्रहेणमुथहास्वामीयुक्तः स्यात् अथवामुतारव्यदृष्ट्या चतुर्थसप्तमैकदशमदृष्ट्यादृष्ट
श्चेतदानशुभः अनिष्टफलदः एवं अस्मिन् योगद्वयेनिधनंमरणंमेवस्यात् द्वयोर्मध्ये यदेकोयोगस्तदा
मृत्युसमत्वंमरणतुल्यंस्यादित्याहुः अथमुथहायास्तत्स्वामिनश्चशुभाशुभफलमाह मुथहेति
जन्मनिजन्मकुंडल्यावर्षवगतमुथातस्याः स्वामीवाविकल्पेनशुभग्रहैः ईहितयुक दृष्टा युक्ता

पद्यमेशेनयुतोथदृष्टः सुतारव्यदृष्ट्यानशुभस्तदापि योगद्वयेस्यान्निधनंयदेक
योगस्तदामृत्युसमृत्युसमत्वमाहुः ७९ मुथहानत्यतिर्वापिजन्मनीहितयुक्
शुभैः वर्षारंभेशुभंधत्ते ऽव्देचेदंत्यन्यथाशुभम् ८० इतिमुथहानिरूपणम् ॥

दृष्टयुक्तइतियथायोगं वर्षारंभे वर्षपूर्वार्द्धे शुभंशुभफलंस्वत्ते ददाति प्राप्नोति कं अथजन्मकुंडल्यामुक्त
संभावनांतरंचेद्यदि अब्दे वर्षकुंडल्यांवर्षावगतमुथातस्याः स्वामीवाशुभग्रहैर्दृष्टयुक्तः प्रत्येकंतर्हि
अंतेवर्षांतरार्द्धेशुभफलंददाति शुभंदत्ते अन्यथापापग्रहैर्दृष्टयुक्ताः प्रत्येकंजन्मवर्षक्रमेण वर्षस्य
पूर्वार्द्ध परार्द्धयोरशुभफलंददाति अन्यत्यत्राकारप्रश्लेषः नसदितियुक्तः पाठः उभयत्रसंभवे बर्षेशुभम्
शुभंवार्धसिद्धेनैकत्रार्द्धे उभयासंभवमध्यमंवर्षं अत्रदृष्टिति रतिम्यग्रहतारतम्यशुभाशुभग्रहदृष्टिता
रतम्यादिभिर्वर्षार्द्धयोर्वर्षस्यवातरतमादिभेदः बहवः ॥

सुबुध्यासुधीभिरवगंतव्याः॥इति वर्षतन्त्रटीकायांमुथहाध्यायः॥अथसत्यरिष्टयोगेवक्ष्यमाणंफलं
दर्शयेवेत्याहपाणिन्यः वृथाफलंहायनवंहियस्मान्नजीवतंहायनरिष्टयोगात् रिष्टानियस्मात्प्रथमं
यवक्ष्यपूर्वैर्विधिज्ञैःकथितानियानितिप्रथमतोरिष्टाध्यायोव्याख्यायतेतत्रादौलग्नेशाद्यरिष्ट
माहलग्नेशइतिलग्नेशेवर्षलग्नस्येसोमिनिअष्टमगेअष्टमस्थानेगेकुजेनभौमेनक्षितेदृष्टेसति
अथवाअष्टेशेअस्तमस्थानाधीशेतनुस्थेलग्नस्थेभौमेनदृष्टेसतिअस्मिनयोगद्वयेशस्त्रघातःवि

अथवर्षारिष्टविचारः लग्नेशेष्टमगेष्टेशेतनुस्थेवाकुजेक्षितेअजीवयोरस्तयो
गेःशस्त्रघतोविपन्मृतिः॥१॥अब्दलग्नेशरंध्रेशौरव्ययाष्टहिबुकोपगौमुथ
हासंयुतौमन्युप्रदौतद्धातुकोपतः॥८२॥

पन्नज्वरातिदुःखंःवामृतिश्चेतर्वास्यात्अथ
वाअस्तशुक्रयोरस्तगतेः सूर्यसान्निध्यवशादस्तंगतयोःसतोशस्त्रघातोविपन्मृतिश्चेति॥१॥अथा
न्यदाहअब्देतिअब्दलग्नेशाष्टमस्थानाधीशौव्ययाष्टहिबुकोपगौद्वादशाष्टमचतुर्थस्थानानां
मध्येकस्मिंश्चित् स्थानेस्थितौतत्रापिमुथहासंयुतौस्यातांतदातद्धातुकोपतःतयोर्ग्रहयोर्योधातु
वातपित्तादिस्तयोःप्रकोपतोद्भूतसुन्नविकोरान्मृत्युप्रदौस्यातांत्रिभिर्मिलत्वाएकएवयोगःनए
थकपदाएकतमस्ययोगस्तदाक्लेशमात्रं॥८२॥

अथान्यदाहजन्मेतिजन्मलग्नाधिपः जन्मकालीनलग्नस्यस्वामी अब्दे वर्षकाले अवीर्यः नविद्य
तेपंचवर्गीवलरहितः सन् वर्षलग्नादष्टमस्थानस्थराशेः स्वामीयदा अस्तगः वर्षलग्नात्सम-
स्थाने वर्तमानः इति केचिदाहुः अन्ये एवंवदंति अस्तगः सूर्यसान्निध्यादस्तंगतः सन् एवंमतद्वये
सूर्येणदृष्टस्तर्हि सग्रहोमृत्युंददाति कुष्टंकुंडं आपदः तच्चासमुच्चये ददातिजन्मेलग्नाधिपोवीर्यो
मृतीशोब्देस्तगोयदासूर्य दृष्टोमृतिंदत्ते इत्यत्र अस्तगोपदेति पाठस्तुप्रामादिक एवयतः ग्रहस्यास्तं
गतस्यसूर्य सहचरितत्वाददृष्टेश्चसंभवः सूर्यदृष्टइत्यसयवैयर्थ्यायतेः तथावलर्यादीतरद्वितीयद्वाद

जन्मलग्नाधिपोवीर्योमृतीशोब्देस्तगोयदासूर्यदृष्टोमृतिंधत्तेकुष्टकुंडूतथापदः
८२अस्तगौमुथहालग्ननाथौमंदेद्वितौयदा॥

शराशिगतस्यअस्तत्वसंभवोदृष्टेस्तुनसं
भवः अथवा अस्तगतइत्यत्र सप्तमगतइत्यर्थे मूलवक्याभावावैवीर्यौयंमंतव्यः वस्तुतस्तु अस्तगइत्य
त्रलग्नगइतिपाठः मृतीशोवर्षलग्नादष्टमस्थानाधीशोलग्नगः सूर्येणदृष्टस्तदामृत्युं८९ तथाचो
क्तंप्राणिस्येनचेज्जन्मनाथो विवलोमृतीशोलग्नंगतोभास्करदृष्टिमूर्तिः शास्त्राभिघातं वहुधात्व
कष्टं कुष्टंसाशरीरेमरणेनतुल्यमिति ८३ अथान्यदाह अस्तगाविति मुथहालग्ननाथौमुथहास्वामी
वर्षलग्नस्वामी एतौउभौव्यस्तगौसूर्यसान्निध्यवशादस्तगामिनौ अस्तंगतौ मन्दे द्वितौ यदा ॥—॥ 

मदेन शनिनाईक्षितो दृष्टो यदास्यानां तदासर्वस्य स्त्रीपुत्रद्रव्यादेर्नाशः मृतिः स्वस्य मरणं कष्टंपहा
आधिर्मानसीव्यथा व्याधिः शरीररोगः भयंभीतिः एतेपदार्थाः स्युः ७४ अथान्यदाह क्रूरेति अब्दे
शीवर्ष स्वामी क्रूरमुसरिफः पापग्रहेणकृत इसराफोयस्यासौभवति जन्मेशोजन्म लग्नेस्वामी क्रूरतिः
अस्तंगतत्वादिना क्रूरतांप्राप्तोभवति तत्रवर्षेतदपतरस्य शुभग्रैहः कृत्वाकंबूलयोगेशुभग्रहेण
मुथसिली चंद्रस्ताभ्यांसहमुथशिलीचतदन्यतरीभवतीत्यर्थः अपिशब्दाच्छुभकंबूलयोगेत्रारि

सर्वनाशोमृतिः कष्टमाधिव्याधिभयंरुजः ७४ क्रूरंमुसरिफोब्देशोजन्मेशः क्रूरितः शु
भैः कंबूलेविपन्मृत्युरित्यमन्याधिकारितः ७५ क्रूराः वीर्याधिकाः सौम्यानिर्व
लारिपुरंध्रगाः तदाधिर्व्याधिभीतिः स्यात् कलिर्हानिस्तथाविपत् ॥ ७६ ॥

ष्टाभावाभासविपन्मृत्युः नानादुःखानुभवेतमरणंभवति पुनः शुभकंबूलाभावेइत्यमुक्तरीत्या
अन्याधिकारितः वर्षेशस्थानेमुथहे सादिकमधिकारणंगृहीत्वाजन्मेशः क्रूरतइत्यादिकेसिद्धे वि
पन्मृत्युः स्यादित्यर्थः अत्रकेनचिच्छुभैः कंबूलेइत्यस्यवर्षस्वामीजन्मलग्नस्वाम्योर्मुथशिलयो
गेतयोश्चंद्रवतूकेनविच्छुभग्रहेणमुथशिलयोगरूपकंबूलेसतीतिव्यानंकृतंतच्छुद्धेतप्रतिपा
द्यंजन्मलग्नवर्षस्वाम्योमुथशिलप्रतिपादकशब्दाभावात् द्वयोर्मुथशिलेताभ्यांचंद्रस्यमुथशिले
सतिकंबूलयोगाभिधानात् चंद्रेतरेणमुथशिलेनस्ययोगस्याभिन्नसंज्ञाभिधानाच्चतत्पलं ७५ अथान्यदाह

ता॰
टी॰
टि॰
२८
४८

क्रूराइतिक्रूरापापग्रहाः वीर्याधिकापंचवर्गीवलेनवलिष्ठाऽसौम्याः शुभग्रहाः निर्वलाः पंचवर्गीवले
नरिपुरंध्रगाः षष्ठाष्टमस्थानगाश्चेत् सुतसाधिव्याधिभीरित्यादिरशुभंफलंस्यादितिस्पष्टं ८६ अथा
न्यदाहनीचइतिशुक्रोयत्किंचित्स्थानेस्थितः सन् नीचेनीचराशावस्तिगुरुयत् किंचितस्थानेरस्ति
सन् शत्रुभागेशत्रुनवांशेस्थितस्तदासौख्यलवोपिननास्ति अथमेकोयोगः अथान्यः लग्नेशइतिलग्नेशे
वर्षलग्नस्वामिनि अष्टमगे अष्टमेस्थानेस्थेसतिवाविकल्पेनअष्टेशेअष्टमस्थानाधीशेतनौलग्ने

नीचेशुक्रोगुरुः शत्रुभागेसौख्यंलवोपिनः लग्नेशोष्टमगेष्टेशेतनौवामृतिमा
दिशेत् ८७ निर्वलोधर्मवित्तेशौदुष्टखेयतनौस्थिताः लक्ष्मीश्चिरार्जितानश्येद्य
दिशक्रोपिरक्षिताः ८८ नीचेचंद्रेस्तगासौम्यवियोगः स्वजनैः सहशरीरपीडा
मृत्युर्वासाधिव्याधिभयंध्रुवं ८९ अवलग्नंजन्मलग्नराशिभ्यामष्टमंयदा॥ ॥

सतिएवंविधेयोगेमृतिमादिशेत् ८७ अथान्यदाहनिर्वलावतिधर्मवित्तेशौनवमद्वितीयस्थानाधीशौ
निर्वलौपंचवर्गीवलेनहीनौवलेदुष्टखेटाः पापग्रहाः तनौलग्नेस्थिताः एतादृशेयोगेलक्ष्मीश्चिरा
र्जितानश्येदितिस्पष्टं ८८ अथान्यदाहनीचेचंद्रेइतिक्वचित्स्थानेस्थितश्चंद्रोनीचेनीचराशौवास्त
सौम्याः शुभग्रहाः बुधगुरुशुक्राः अस्तगाः अस्तंगताः सुतदावियोगइत्याद्यशुभंफलंस्यात् ८९ अ
थान्यदाहअवव्पेतिजन्मलग्नराशिभ्यांजन्मल

ग्नतः लग्नराशेरष्टमे अब्दलग्नं वर्षलग्नम् अष्टमं यदा स्यात् तदा कष्टं महाव्याधिमयं फलं स्यात् तादृशं वर्षलग्नं पापग्रहैर्युक्तं ईक्षितं दृष्टं वा तदा मृत्युरेव स्यात् ८० अथान्यदाह जन्मनीति जन्मनि जन्मकालिकलग्नाद् अष्टमगः अष्टमस्थाने पापः पापग्रहस्तिष्ठेत् स यदि वर्षलग्ने वर्षकालिकलग्ने स्यात् स रुजं रोगमाधिं मानसीं व्यथां च दद्याति अयमेको योगः अथापरो योगः चंद्राब्दलग्नयोर्वर्षकालिकचंद्रवर्षलग्ने वर्षकालिकलग्नराशिस्वामिनौ पंचवर्गोनष्टबलौ चेत् स्यातां तदा मृतिः स्यात् ८१ अथान्यदाह ज

कष्टं महाव्याधिमयं मृत्युं पापयुतेक्षणात् ८० जन्मन्यष्टमः पापो वर्षलग्ने रुगाधिदः चन्द्राब्दलग्नपौ नष्टबलौ चेत्स्यात्तदा मृतिः ८१ जन्माब्दलग्नयौ पापयुक्तौ पतितभस्थितौ रोगाधिदौ मृत्युकरावस्तगौ नेक्षितौ शुभैः ८२ व्ययांबुनिधनारिस्था जन्मेशाब्दपमुंथहाः ॥

न्मेति जन्माब्दलग्नयो जन्मे लग्नस्वामी वर्षलग्नस्वामी च पापयुक्तौ पतितभस्थितौ तांसस्ततमं दुष्टस्थानें चतुर्थाष्टमषष्ठद्वादशं तत्रस्थितौ स्यातां तदा रोगाधितौ भवतः यदि तौ द्वावपि अस्तगौ सूर्यसन्निध्यवशादस्तंगतौ शुभैः शुभग्रहैर्निरीक्षितौ न दृष्टौ तदा मृत्युकरौ भवतः ८२ अथान्यदाह व्यये इति एकत्रगाः एकराशिगाः जन्मेशाब्दपमुंथाहा जन्मजन्मस्वामी वर्षलग्नस्वामी मुंथा यान्यपादशचतुर्थाष्टमस्थाने स्थितः संतस्तदाअसाति प्रतिबंधः

केम्रत्युः स्यात् यद्येते पापग्रहैः द्युतदृष्ट्याचतुर्थदशमैकसप्तमस्थानस्थदृष्टास्तदासत्यपिप्रतिबंध
केम्रत्युः स्यातध्रुवंनिश्चयेनम्रत्युः स्यात् केचिदेवंव्याकुर्वते अब्दपइत्यत्रवर्षलग्नस्वामीमुथहा
इत्यत्रमुथहास्वामीतिइदमपिसंभवतिस्वामिप्रकरणपाठात् ८३ अथान्यदाहचंद्रइति व्ययेद्वादश
स्थाने शनियुतश्चंद्रोभवेत स्तुभः षष्टानेस्थितोभवेत तदार्थस्यद्रव्यस्य नाशकृत्स्यात् अशुभेसरा
फानयदा अशुभेनपापग्रहेणसाकंयोगकारकग्रहास्यंयथासंभवतिमीसराफेयोगाश्चेत्तर्हिचित

एकार्दगास्तदाम्रत्युः पापद्युतदृशांध्रुवं ८३ चंद्रोव्ययेशनियुतः स्तुकः षष्टोर्थनाश
कृत् चितवैकल्पमशुभेसराफोन्नशुभेक्षणात् ८४ चंद्रोर्कमंडलगतोरिपुरिष्फा
ष्टवंधुगः॥ वैकल्पांबुद्धिविपयासः स्यात् अशुभेक्षणात् तत्रशुभग्रहदृष्टिश्चेत्तर्हि अ
र्थनाश चित्तवैकल्पेनस्यातांकेचित्तुपापग्रहकृतः शनिशुक्राभ्यामवैसराफयोगोनहि चंद्रेण
साकंचंद्रस्य शीघगतित्वात्तदितितन्नअशुभग्रहस्येसराफयोगकर्तृत्वोक्तेरभावात् ८४ अथा
न्यदाहचंद्रइति अर्कमंडलगतः अस्तंगतश्चंद्रः रिपुरिष्फाष्टवंधुगः षष्टाद्वादशाष्टमचतुर्थस्था
नान्यतरस्थानस्थश्चेद्भवति तदात्रिदोषतः वातपित्तकफेभ्यस्तस्यरुजाविविधानानाप्रकारश्चे
रोगः स्यात् यदिचंद्रः परिईन्यदृशागुरोदृष्टिश्चेतदासुखंस्यात् रिपुरिष्फाष्टवंधुगइत्यत्ररिष्फाष्टभस्थि

मणित्येनराज्ञीश्वरेभास्करमंडलस्थेषष्ठेव्ययेवाम्रतिभावसंस्थेत्रिदोषतोसौबहुभिः प्रकारैः करोति
कष्टंविविधंदशायामिति ९५ अथान्यदाहहद्देतिहद्दाहायनलग्नेशोवर्षसमयलग्नेहद्दास्वामिवर्षलग्न
स्वामिनोसप्तमाष्टमांत्यस्थानस्थितौसत्यांखलान्वितौचेत्पापग्रहैर्युक्तौभवतस्तदातौस्वामिनोस्वद
शायामंतर्दशायाञ्चनिधनदौमरणप्रदौभवतः यदाशुभग्रहैर्मित्रदृष्ट्यादृष्टौतदासुखंभवेत् ९६ अथा

त्रिदोषतस्तस्यरुजाविविधेज्यदृशाशुभं ९५ हद्दाहायनलग्नेशौसप्ताष्टांत्येखलान्वितौ
सुहद्दायांनिधनदौशुभदृष्ट्याशुभंवदेत् ९६ अब्दलग्नाद्व्यज्जूव्ययार्थस्थोरुजात
दाएवंवर्षाब्दलग्नेशाजन्मेशेरपिर्वधनं ९७ नीचेत्रिराशियेपापदृष्टेकार्यंविनश्यति

न्यदाह अब्दलग्नादितिवर्षलग्नाद्व्यज्जोमार्गवक्रिणोद्वादशाद्वितीस्थानस्थितौस्यातांतद्यथाद्वाद
शेमार्गीपापग्रहः द्वितीयेवक्रीपापग्रहइत्यर्थः तदारुजारोगोत्पत्तिः स्यात् एवममुनाप्रकारेणवर्षा
ब्दलग्नेशाजन्मेशेः वर्षस्वामिनोवाजन्मलग्नस्वामिनोश्चेत्पापग्रहकृतकर्तरीयोगस्तदाबंधनंकारा
ग्रहप्राप्तीः स्यात् ९७ ॥ अथान्यदाहनीचे इतित्रिराशियेवर्षलग्नेयस्त्रैराशिकस्वामीसपदिनीचराशि
स्थितः सन् पापग्रहैर्दृष्टश्चतदाचिंतितंकार्यं विनश्यतिनाशं

प्राप्नोतिअथ

मेकोयोगः अथान्यः इंषीहेशेमुंथहास्वामिनि अब्दपेवर्षस्वामिनिवा अरिभेशत्रुराशौ अस्तंयातेसूर्य सान्निध्यादस्तंयातेरुजरोगाधिक्येनविपत्स्यात् ८८ अथचंद्रारिष्टंसायवादवाह चंद्रेइतिरिष्फषडष्टमद्यूनगतोद्वादशषष्टाष्टमलग्नएतत्स्थानगतश्चंद्रः अशुभेः पापग्रहैर्दृष्टः शुभग्रहैर्दृष्टोनुतुंकरोतीत्यर्थः अत्रारिष्टप्रसंगेभूशब्देनचतुर्थस्थानमंगीकृत्यव्याख्यातंतदसत्कुतः भूशब्दस्य

इंथिहेशेव्दपेवारिभेस्तंयातेरुजोविपत् ८८ चंद्रोरिष्फषडष्टभूद्युगयुतोदृष्टो शुभैर्नेशुभैसौरिष्टंविदधातिमृत्युमथवाभौमेक्षणादग्निभीः शास्त्राद्वाशनिराहुकेतुभिरेरभीतिंरुजंवायुजाः

लग्नवाचकत्वात् यद्यपिभूशब्देनक्वचिच्चतुर्थस्थानमप्युच्यते तथापिचतुर्थचंद्रस्याशुभफलत्वंक्वापिनोक्तं सर्वत्रचतुर्थस्थानस्थितचंद्रस्य शुभफलत्वस्योक्तत्वाच्च उक्तंच षडष्टगोहिमरुचिरिति अन्यच्च निधनतनुमदारप्रांत्यगः शीतरश्मिरिति एवंसर्वग्रंथेषुएतादृशश्चंद्रोभौमेनदृष्टोऽग्निभयंकरोति शास्त्राद्वाभीति शनिराहुकेतुभिर्दृष्टश्चंद्रः अरेः शत्रुतोभीतिंविदधाति रविणासूर्येणदृष्टश्चंद्रः वायुसंबंधेनरुजरोगंदारिद्र्यंधनरहितंकरोति अथउक्तस्यापवादः॥ " " " " " " " " "
" " " " " " " " " " " " "

ता॰
टी॰
वि॰
३३
३३

चंद्रस्यशुभदृशाबुधगुरुशुक्राणांमित्रदृष्ट्याशुभंशुभफलंवदेत् केवलंईज्यालोकनात् बृहस्पतेर्दृ
ष्ट्यैवतथापिशुभफललाभमादिशेत् कथयेत् ९९ अथसुधाकृत्तत्रअरिष्टयोगमाह क्रूरान्वितेतिसुथहा
क्रूरान्वितापापग्रहैर्युक्ताशनिनाईक्षितादृष्टायुतावातदाधिव्याधिपदादिदातिअयमेकोयोगः अ
थान्यः सामुथहाजन्मर्षिजन्मलग्नेवादशचतुर्थषष्ठाष्टमसप्तमएतत्स्थानानामध्येयत्रकुत्रापि-

रिष्टंरविणाशुभंशुभदृग्ज्यालोकनाद्दिशेत् ९९ क्रूरान्वितेक्षितयुताशनिनेन्थि
हाधिव्याधिप्रदाजनुषिरिष्फसुखारिरंध्रेद्यूनेचवर्षतनुनैधनेगामृतिंसादृत्तेख
लेक्षितयुतेत्यपिचिंत्यमार्यैः १०० इत्यरिष्टाध्यायः अथारिष्टभंगः लग्नाधिपोबल
युतः शुभेक्षितयुतेपिवाकेंद्रत्रिकोणगोरिष्टंनाशयेत्सुखवित्तदः ॥१॥ ॥

स्थिनासतीयदिवर्षतनुनैधनगावर्षलग्नादष्टमस्थानगाविशेषतः खलेक्षितयुतापापग्रहैर्दृष्टायु
तावास्यात्तदासामुथामृतिंमरणंदत्तेददातिइत्यपिआर्यैः दैवज्ञैश्चिंत्यं १०० इतिश्रीदिवाकरात्मजवि
श्वनाथविरचितेवर्षतंत्रटीकायांअरिष्टाध्यायः अथारिष्टभंगाध्यायोव्याख्यायते लग्नाधिपइतिल-
ग्नाधिपः वर्षलग्नस्वामीबलयुतः पंचवर्गीबलेनबलिष्ठपदाशुभेक्षितयुतः शुभग्रहैःईक्षितःदृष्टः
युतोवाअथवात्रिकोणकेंद्रगः त्रिकोणंनवमंपंचमंकेंद्रं१।४।७।१० एतत्स्थानस्थः सन्अरिष्टंनाशं

दशायां सुखवित्तदः स्यात् १०४ अथान्यदाह गुरुरिति गुरुरिति गुरोः केंद्रे त्रिकोणे वापायादृष्टः पापग्रहैरदृष्टः शुभग्रहैर्दृष्टः एतादृशः सन् लग्नचंद्रस्थितिहारिष्टं नाशयेत् लग्नचंद्रसुथहोत्पन्नमारिष्टं नाशयेत् पश्चात् अर्थे सुखं दिशेत् २ अथान्यदाह सुखं इति सुखं वर्षलग्नाच्चतुर्थस्थानं स्वामिनायुक्तं सद्भिः शुभग्रहैर्दृष्टं सौख्ययशोर्थदं भवति अयमेको योगः अथान्यः गुरुर्लग्ने अथावा तृतीये स्थाने स्यात्तथा सुखे चतु

गुरुः केंद्रे त्रिकोणे वा पापादृष्टः शुभेक्षितः लग्नचंद्रे स्थिहारिष्टं विनाश्यार्थसुखं दिशेत् २
सुखं स्वामियुतं सद्भिर्दृष्टं सौख्ययशोर्थदं लग्ने तृतीये थ गुरुर्जन्मेट् सौख्यार्थदः सुखे ३ लग्ने
धुनेशस्तनुगः सुरेज्यः क्रूरैरदृष्टः शुभमित्रदृष्टः रिष्टं निहंत्यर्थयशः सुखाप्तिं दिशेत्स्वपाके
नृपतिप्रसादात् ४ बलान्वितो धर्मधनाधिनाथौ क्रूरैरदृष्टौ तनुगौ यदा स्तां ॥ ॥

स्थाने स्यात् जन्मलग्नस्वामी तदा सौख्यार्थदः स्यात् ३ अथान्यदाह लग्न इति धुनेशः सप्तमस्थानाधीशः लग्नेस्यात् सुरेज्यः बृहस्पतिरपि तनुगः लग्नगः स्यात् क्रूरैः पापग्रहैर्न दृष्टः शुभग्रहेण मित्रग्रहेण वा दृष्टस्तदा स सग्रहो रिष्टं निहंति दूरीकरोति स्वपाकोस्वे स्वदशायामर्थयशः सुखाप्तिं नृपतिप्रसादं दिशेत् ददाति ४ अथान्यदाह बलान्विताविति धर्मधनाधिनाथौ नवमद्वितीयस्थानस्वामिनौ बलान्वितौ पंचवर्गी बलेन बलिष्टौ क्रूरैः पापग्रहैरदृष्टौ एतादृशौ संतौ तनुगौ लग्नगौ स्यातां तदारिष्टस्य नाशः

ता॰
टी॰
३५
३८

राज्यमित्यादि शुभफलंस्यात् ५ अथान्यदाह त्रिषष्टेति अ सौमयैः पापग्रहैः त्रिषष्टलाभोपगतैः तृतीयषष्टैकादशस्थानस्थितैः सौम्यः शुभग्रहः केंद्रत्रिकोणोपगतैः १।४।७।१०।९।५ अरिष्टस्यनाशोभवतिचकारः समुच्चयार्थः रत्नांवरइत्यादिस्पष्टार्थं ६ अथान्यदाहयदेतियदामुथहाधिनाथः मुथहास्वामीसवीर्यः पंचम वर्गीबलेन बलिष्टः अथवालग्नाधिपः वर्षलग्नस्वामीबलिष्टः वाजन्मलग्नस्वामी

राज्यंगजाश्वांवररत्नपूर्णारिष्टस्यनाशोप्यतुलंयशश्च ५ त्रिषष्टलाभोपगतैरसौम्यैकेंद्रत्रिकोणोपगतैश्चसौम्यैः रत्नांवरस्वर्णयशः सुखाप्तिर्नाशोप्यनिष्टस्यतनोश्चपुष्टिः ६ यदासवीर्येमुथहाधिनाथोलग्नाधिपोजन्मिविलग्नयोर्वाकेंद्रत्रिकोणायधनस्थितास्तेसुखार्थहेमांवरलाभदाः स्युः ७ तुंगेशनिर्वाभृगुजोगुरुर्वाशुभेत्थशालाद्यवनाद्धनाप्तिम् ॥

बलिष्टः सन् केंद्रत्रिकोणायधनस्थिताः १।४।७।१०।९।५।११।२ तेसुखार्थहेमांवरलाभदाःस्युः यदाउक्तस्थानगाः सः सर्वेपिताहृशाः संतस्तदाउक्तपदार्थानांलाभोभूयात् ७ अथधनलब्धिमाह तुंगइति तुंगेउच्चेशनिः वाभृगुजः शुक्रः उच्चेवागुरु बृहस्पतिरुच्चेसग्रहः शुभेत्थशालोत् शुभग्रहेणसाकंमुथशिलंचकुर्वीत तदायवनाद्धनाप्तिंकुर्यात् यदातुसर्वेपिएताहृशास्तदालेख्यप्रभुतः महतीप्राप्तिरित्यर्थः

तः सिद्धिंत्रयमेकोयोगः अथा

परः वित्तगः द्वितीयस्थानस्थितः वलिष्टोभौमः यशोर्थमित्यादिशुभफलं दद्यात् ९ अथान्यदाह सूर्येज्येति सूर्यवृहस्पतिशुक्राः मिथः परस्परमित्थशालं मुथशिलं कुर्युः कुर्वंति तदाराज्ययशः सुखार्थाः स्युः अयमेकायोगः अथान्यः सूर्य इति इत्थिहापा मुथहायुक्तस्थानाद्विपचयेत्रिषष्टदशमैकादशस्थानयोर्मध्येयत्रकुत्रापिस्थितः सूर्यः भौमोवाचेत्स्यात्तदाभर्तृकल्याणंयशः मंगलं

वलीकुजोवित्तगतोयशोर्थं तेजांस्यकस्माच्चसुखानिदद्यात् ९ सूर्येज्यशुक्रामिथस्त्थशालंकुर्युस्तदाराज्ययशःसुखार्थाः सूर्यःकुजोवोपचयेददातिभर्तृस्यशोमंगलमित्थिहायाः ९ शुक्रोज्ञेचंद्राहद्देखेपापास्त्र्यायगतायदिस्वबाहुवलतोहेमसुखकीर्त्तिंनरोश्नुते १०॥

विवाहादिकल्पदद्यातिसमुद्भुवेन अथान्यदाह शुक्रचंद्राइतिशुक्रबुधचंद्राः पचवर्ग्यांस्वहद्दायांवतस्युः पापाः सूर्यभौमशनयः आयगतः तृतीयेकादशस्थानगतायदिस्युस्तदानरः पुरुषः स्वबाहुवलतः स्त्रीयपराक्रमेणसुवर्णसुखकीर्तीरश्नुते भनक्ति अत्रचंद्रः स्वहद्दायामित्युक्तं नहिचंद्रस्यहद्दचक्रमध्येगणनानास्तिएतदर्थेसंमतिवाक्यंकचापिनास्तिइतिकृत्वातेषामापमतएवजानंतु॥१०॥

ता॰
टी॰
पि॰
८७
१४

अथान्यसुभयोगमाह बुधसुक्राविति यदि बुधसुक्रौमुसरिःफयोगं कुरुतः गुरुर्वृहस्पतिः विक्रम
भावगस्तृतीयस्थाने स्थितस्तदा राज्यपश्रोहेममुक्ताविद्रुमलब्धयस्युः ११ अथान्यसाहभौमइति
भौमः अवेशः वर्षेशः सन्मित्रगृहे तिष्टति स्वगृहादिगेः स्वगृहस्वोच्चादिस्थाने स्थितैर्ग्रहैः सहमु
थशिलयोगं करोति स्वगृहोच्चादिस्थाने स्थितेन चंद्रेणापि सहमुथशिलं करोति तदाकंबूलोत्युच्य

बुधशुक्रौमुथशिरिफौ गुरुर्विक्रमभावगः तदाराज्ययशोहेममुक्ताविद्रुमलब्धयः
११ भौमो मित्रगृहे ब्देशः कंबूली स्वगृहादिगैः गजाश्वहेमांवरभूलाभं दत्ते सुखा
दिकं १२ इत्थं जन्मनि वर्षे च योगकर्तुर्वलावलं विमृश्य कथयेद्राजयोगं तद्भंगमे
व च १३ अब्देथिहेसादिखगाः खलैश्चेद्युते हितास्तगनीचगा वा ॥ ॥ ॥

ति एतादृशो भौमो गजाश्वहेमांवरभूमिलाभं सुखादिकं ददाति अथवा लावलविचारेण राजयोगसर्व
धिष्णुभाशुभुफलयोगमाह इत्यमिति इत्थममुना प्रकारेण जन्मनि जन्मलग्ने वर्षे वर्षकाले वराज
योगकर्तुर्ग्रहस्य वलावलं पंचवर्ग्यां वलिष्टः स्वोच्चादिगः अथवा निर्वलः नष्टवलः नीचादिगः इति
विमृश्य विचार्य राजयोगं तद्भंगं च कथयेत् १३ अथ राजयोगभंगमाह अब्देथिहेशादिखगा इति अब्देशः
वर्षस्वामी इथिहेशः मुथहास्वामी आदिशब्देन वर्षलग्नजन्मलवस्वामी ग्रहाः खलैः पापग्रहैर्युताः
दृष्टाः सौम्यः शुभग्रहावलोनाः हीनवलाश्चेत्स्युस्तदा राजयोगभंगं वदेत्

अयमेकोयोगः अथान्यः अस्तगः सूर्यसान्निध्येनास्तंगतः नीचगावानीचराशिगताः वासौम्याः शु
भग्रहाः पलीनां पंचवर्गी वलेनहीनवलाश्चेत्स्युस्तदाराजयोगभंगंवदेत् योगद्वयेपिफलंवित्तसुख
त्वयंचवदेत् २४ यदिसौम्यग्रहाः स्वोच्चस्वगृहादिगताः केंद्रत्रिकोणायगताश्चेत्स्युस्तदाराजयोग
भंगकरतार इत्याहमणित्थः यदीन्दुसौम्यज्यसुरारिपूज्याः स्वोच्चगताः स्वांशगतायदिस्युः त्रिको
णकेंद्रायगताः स्युमित्रैर्दृष्टाश्चयुक्तानिजवर्गसंस्थाः गजाश्वरत्नांवरदेशलाभंस्त्रीपुत्रलाभंविवि

सौम्यावलोनान्तपयोगभंगंतदावदेद्वित्तसुखत्रयांश्च २४ इत्यरिष्टभंगाध्यायः श्री
गर्गान्वयभूषणंगणितविच्चिंतामणिस्तत्सुतोनंतोनंतमतिव्यधात्खलमतध्वस्तै
जनुः पद्धतिंतत्सूनुः खलुनीलकंठविबुधोविद्वच्छिवानुज्ञयाऽवोचन्नवर्षममुत्य
हाफलमथारिष्टादिसुयोगयुक॥२५॥
धंचसौख्यंयच्छंतिखेटाः परमर्दनंचकुर्वंतिसर्वेविलि

नोनराणांइत्यरिष्टभंगाध्यायः अथद्वादशभावविचाराध्यायोव्याख्यातेतत्रादौतनुभावविचारः योभा
वइति द्वादशभावानांमध्येयः स्वामीशुभग्रहः पापग्रहोवासौम्याः शुभग्रहैः आभ्यांस्वामिशुभा
भ्यांदृष्टः युक्तोव्या अर्थभावः एधतेवृद्धिंकरोतियोभाववः स्वामिन्यतिरिक्तोनपापग्रहेणदृष्टः
युतोवास्यात्तदातस्यभावस्यनाशःऽमिश्रैः शुभग्रहैः पापग्रहैश्चयुक्तोदृष्टोवायोभावोभवतितदा
तस्यभावस्यमिश्रफलंशुभाशुभमिश्रताफलंवदेत् ॥ 

ता॰
टी॰
३९
३१

कथयेत् गार्गिः नीचस्थोरिगृहस्थोवाग्रहोभावविनाशकृत् उदासीनगृहेमध्योमित्रस्वर्क्षत्रिकोणग
स्वोच्चगश्च ग्रहोवश्यंभाववृद्धिकरस्मृत इतितत्रषष्टाष्टमांत्यभावानांविपरीतानि फलान्याहवरा
हः समुयचविपतीसौम्यभावेषुसत्यः कथयतिविरीतंरिपफषष्टाष्टमेष्विति १ अथलग्नाधिपस्य
शुभाशुभफलमाह लग्नाधिपे इतिलग्नाधिपे वर्षलग्नस्वामीनिवीर्ययुतेपंचवर्गीवलेनवलिष्टेस

अथभावविचारः याभावः स्वामिसौम्याभ्यांदृष्टोयुक्तोयमेधतेपापदृष्टयतोनाशोमि
श्रैर्मिश्रफलंवदेत् १ लग्नाधिपेवीर्ययुतेसुखानिनैरुज्यमर्थागमनंविलासःस्यात्
मध्यवीर्येल्पसुखार्थलाभः क्लेशाधिकत्वंविपदल्पवीर्ये २ जन्मांगंगपतीन्थिहाप
तिसमानाथाद्यधीकारवान् सूर्योनष्टवस्त्वगादिविलयंकुर्यान्निरुच्छाहताम् ॥

तिसुखानि इत्यादि शुभाशुभफलंस्यात् मध्यवीर्येमध्यवलेसतिसुखार्दलाभः अल्पः स्यात अल्प
वीर्येहीनवलेसति क्लेशाधिकत्वं विपत्स्यात् २ अथवर्षाधिकारीग्रहेनष्टवलेसतिविशेषफलमा
हजन्माष्टांगेतिजन्माष्टांगयतीजन्मलग्नस्वामीवर्षलग्नस्वामीवाइंथिहापतिः मुथहास्वामीवास
मानाथादि वर्षस्वामी आदिपदात्रैराशिकदिनरात्रस्वामिनः अधिकारवान् एतेष्वधिका
रषुसूर्यादिग्रहेषुयः कश्चिन्नष्टवलः पंचाल्पवलस्तस्य फल माह ॥ ॥ ३९

ता॰ नी॰ टि॰ ४० २७

माहतत्रारोसूर्यश्चेन्नष्टबलस्तत्तत्वगतिविलयंत्वकत्वचातस्यकष्टादिनाविलयंनाशंकुर्यात् अक्षि
नेत्रयोरंधत्वेनविलयंनाशंकुर्यात् निरुत्साहतां उत्साहराहित्यंकुर्यात् नीचत्वंअधमवृत्याजीवनंपि
तृतोमतृतोपिअभिभवः क्लेशः अथचंद्रफलमाहचंद्रइतिस्पष्टं २ अथभौमफलमाहभौमइतिस्प
ष्टं ४ अथशुक्रफलमाहशुक्रेतिस्पष्टं ५ अथलग्नफलमाह लग्नमितिलग्नंवर्षलग्नपापग्रहैर्युतंसौ

नीचत्वंपितृमातृतोप्यभिभवश्चंद्रेविकार्यंतपोदारिद्र्यंचपराभवोग्रहकलिर्व्या
धादिभीतिस्तदा ३ भौमेचलत्वंभीरुबुधेमोहपराभवौजीवेधर्म्मतय: कष्टफला
जीवतवत्तय: ४ शुक्रेविलाससौख्यानांनाश: स्त्रीभि: समंकलि: सोरेभृत्यजना
दु: खंरुजोवृकोपत: ५ लग्नंपापयुतंसौम्यैरदृष्टंसहितंनृणांविवादंवंचनांदुष्ट
मथानंचापिविंदति ६ जन्मावंशगपंधृयाव्दमुथहानाथावलाढ्यास्तदारम्यं
वर्षमुशंतिसर्वमतुलंसौख्यंयशोर्थागम:

म्यै: शुभग्रहैरदृष्टं असहितंतसन्नृणांमनुष्याणांविवादमित्यादिफलविंदतिप्राप्नोतिअथाधिका
रिणोबलिष्टेसतिफलमाह जन्मावंशगतिजन्मलग्नस्वामीवर्षलग्नस्वामीवावर्षलग्नादष्टमस्थान
स्वामीवावर्षीयमुथहास्वामीवाएतेबलिष्टा: चेत् षष्टाष्टमांत्यगतानस्युस्तदाअतुलंसर्वंवर्षरम्य
मुशंतिवदंतिसौख्यंयशोर्थाग

४०

मश्चस्यात् एतेवलिष्टाः संतःषष्टाष्टमांत्यगतायदिस्युस्तदाः खप्रदाइत्यत्यर्थसिद्धंइहपुनःतेच
त्वारःनिर्वीर्याःवलरहिताःसंतःषष्टाष्टमांत्यगताःस्युस्तदाःखभीतिप्रदाःस्युःशुभेक्षांविपदि
एतेचत्वारःशुभग्रहैर्नदृष्टास्तदाएतद्वर्षमशुभंवाच्यंयदिशुभग्रहाःपश्यंतितदापूर्वोक्तंशुभंवाच्य
मिति ७ अथधननाशयोगहसूताविति सूतौजन्मकालेजन्मलग्नेधनप्रदःखेटोधनप्राप्तिकर्त्तायोग्र

षष्ठांत्यगतानचेदिह पुनस्तेदुःखभीतिप्रदानिर्वीर्यायदिवर्षमेतदशुभंवाच्यमशु
भेक्षांविना ७ सूतौधनप्रदःखेटोधनाधीशश्चतौयदिवर्षेनष्टौवित्तनाशान्यनि
देपापवादरौ ८ एवंसमस्तभावानांसूतौनाथाश्चपोषकाःअब्देनष्टवलास्तेषा
नाशायोद्याविचक्षणैः ९॥

हःधनस्थानाधीशश्चतौद्वौग्रहौयदिवर्षेनष्टवलौभवतस्तदावित्तनाशोभवतिअन्यथापितद्द्रव्य
स्यअभिशापंददातिदत्तेपिनत्वयादत्तमित्याभिशापंददातीत्यत्यर्थःअर्थाद्यब्दैवलिष्टौतदाधन
प्राप्तिकरौभवतइत्यर्थः ८ अथान्यदाहएवमितिएवमुक्तरीत्यासूतौजन्मकालेसमस्तभावानां
नाथास्तत्तद्भावफलदातारोग्रहास्तत्तद्भावस्वामिनश्चयदिवर्षेवलिष्टाःस्युःतदातत्तद्भावपोषकाः
पुष्टिकराभवंतियदावर्षेनष्टवलाःस्युस्तदातेषांतत्तद्भावानांनाशायविचक्षणैर्दैवज्ञैरूह्याःस्वयमेव

इतितनुभावः अथधनभावः वित्ताधिप इतिजन्मनिजन्मकाले जीवोबृहस्पतिः वित्ताधिपः धनभा
वस्वामी अब्दे वर्षे वित्तगः द्वितीयस्थानस्थितः सन् लग्नपात्थशाली वर्षलग्नस्वामीनासहमुथशि
लयोगं करोतितदासकलेपिसंपूर्णेपिवर्षेधनाप्तिः धनप्राप्तिः स्यात् यदाबृहस्पतिः लग्नस्वामीव्याति
रिक्तेनक्रूरेसरापेपापग्रहे ईसराफयोगं करोतितदासंपूर्णवर्षेधनहानिः स्यात् १ अथद्वितीयंधनल

अथप्रथमभावविचारः अथधनभावविचारः वित्ताधिपोजन्मवित्तगोब्देजीवोय
दालग्नयतीत्थशालीतदाधनाप्तिः सकलेपिवर्षेक्रूरेसरापेधनधान्यहानिः १ जन्मन्य
थावलोकीज्योब्देब्देशोसोवलवान्यदातदाधनाप्तिर्वहुलाविनायासेनजायते २ एवंय
द्भावयोजन्मन्यब्देतद्भावगोगुरुः लग्नेशेनेत्थशालीचेत् तद्भावजसुखंभवेत् ॥ ३ ॥

द्वियोगमाहजन्मनीतिजन्मकालेबृहस्पतिः अर्थावलोकी अर्थंद्वितीयभावमवलोकयतीतितादृशः सन्
अब्दे वर्षे अब्देशोवर्षस्वामीभूत्वायदावलवान् वलिष्टोभवेत्तदातस्मिन्वर्षेधनाप्तिर्वहुलावहुप्रकारि-
काविनायासेनप्रयत्नेनविनाधनाप्तिर्जायते अथपूर्वोक्तमर्थंसर्वभावेषुअतिदिशतिएवमितिएवमनुना
प्रकारेणजन्मनिजन्मकालेगुरुर्वृहस्पतिः यद्भावयोयद्यत्सहजादिभावस्वामी अस्तितादृशः सन् अब्दे
वर्षेतद्भावमब्देलग्नेशेनेत्थशाली लग्नस्वामिनासहमुथशिलीस्यात्तदातद्भावजंसुखंलभेत ॥ ३ ॥ ४२

अथपुनस्तदेवाहतथेति तथातद्वत् जनुषिजन्मकालेगुरुर्वृहस्पतिः यंभावंपश्येत्तादृशः सन् अब्दे वर्षे अब्दयोगुरुवृहस्पतिः तदातद्भावजंतद्भावसंबंधिसौख्यंताजिकवेदिभिरुक्तं ४ अथाल्पधनप्राप्तियोगंदंडयोगंचाहजन्मषष्ठाधिपइतिजन्मजन्मकाले षष्ठाधिपः षष्ठभावस्वामीसौम्यःबुधः अब्देवर्षलग्नेषष्ठः षष्ठभावगतः तदास्वल्पफलदः स्यात् अथदंडयोगः गुरौपापार्दितेपापग्रहैःपी

तथाजनुषियंपश्येद्भावमब्देऽब्दयोगुरुः तदातद्भावजंसौख्यमुक्तंताजकवेदिभिः ४ अयषष्ठाधिपबुधः षष्ठोब्देस्वल्पलाभदः पापार्दितेगुरौरंध्रेर्थेवादंडः पतेत् ध्रुवं ५ गुरुर्वित्तेशुभैर्दृष्टयुतोवाराज्यसौख्यदः जन्मन्यब्देचमुथहाराशिंपश्यन्विशेषतः ६ एवंसितेव्ययेभूरिद्रव्यंधान्यंचजायते॥

डितेसतिरंध्रेवर्षलग्नादष्टमभावगते अथवाधनस्थेसतिध्रुवंनिश्चयेनदंडः राजकृतः पतेत् अथान्यंधनलाभयोगमाहगुरुरितिवित्तेधनस्थानेगुरुर्वृहस्पतिशुभैः शुभग्रहैर्दृष्टोयुक्तस्तदाराज्यार्थसौख्यदः स्यात् अयमेकोयोगः अथान्यः जन्मनिजन्मलग्नेअब्देचवर्षलग्नेमुथहाराशिंमुथहाक्रांतराशिंशुभग्रहः पश्यन्विशेषतः राज्यादसौख्यदः स्यात् ६ अथशुक्रयोगेनधनयोगंतन्नाशयोगंचाहएवमितिपूर्वोक्तप्रकारेणसितः शुक्रः अब्दयोवर्षस्वामीसन् धनस्थानेशुभ

ग्रहैर्दृष्टेयुतोवास्यात्तदाभूरिधनंचधान्यंचजायतेभवतीत्यर्थः तथाजन्मलग्नेवर्षलग्नेचमुथहाक्रां
तराशौशुक्रेणदृष्टेयुक्तेवासतितत्तदाविशेषतोधनधान्यंवहुतरंभवति अथधननाशयोगः धनभव
नेधनभवनस्वामीवर्षलग्नस्वामिनोश्चनयोः संयोगेएकराशावस्थितौसतिवित्तसौख्यविनाशदः
स्यात् ननुइदमयुक्तंधनभवनलग्नेशयोर्धनभवनेसंयोगस्यशुभफलत्वेनोक्तत्वात् इतिचेत्अत्रा
यनाशयः एकराशिसयोगस्त्रिप्रकारकः तत्रएकः मुथशिलकृतयोगः ईसराफकृतयोगः मुथ
शिलईसराफयोगाभावेकेवलराशियोगस्तृतीययोगः एवंयोगत्रयमध्येकेवलराशियोगः मुथ

वित्तलग्नेशसयोगोवित्तसौख्यविनाशदः ७ एवंबुधेसवीर्य्येस्याल्लिपिज्ञानो
घमैर्धनंजन्मलग्नगताः सौम्याः वर्षेर्थेधनलाभदाः ८

शिलयोगश्चशुभः वित्तसौख्यदः ग्रंथांतरेशुभफलत्वेनउक्तत्वात् अस्मिन्ग्रंथेपिअग्नेवक्ष्यामिउ
र्वरितस्तुईसराफस्तस्याशुभफलत्वादयंयोगस्त्वशुभोक्तइति अथान्योधनप्राप्तियोगावाहएवमि
तिएवंउक्तरीत्याबुधेवर्षस्वामिनिसवीर्येवलिष्टेधनभावस्थितेशुभग्रहैर्दृष्टेयुतेवातथाजन्मलग्ने
वर्षलग्नेचमुथहाक्रांतराशौवुधेनदृष्टेयुक्तेवासतिलिपिज्ञानोघमैर्धनंस्यात् अयमेकोयोगः अथा
न्यः जन्मकालीन लग्नगताः सौम्याः शुभग्रहाश्चेत्पुनस्तदावर्षेवर्षलग्नेतिअर्थेधनभावस्था
भवंतितदाधनलाभदः ८

अथवहुधनप्राप्तियोगमाह मालस्यनीतियवनभाषयामालशब्देनधनंसमपादेनसहमंएवंधनसहमेवि
नेवाधनभवनेवाबुधगुरुशुक्रसंयुतेअथवातैर्बुधगुरुशुक्रैर्दृष्टेसतिधनंभूरिस्वकुलेराज्यमाप्नुयात्
८ अथापरंधनलब्धियोगमाह अर्थार्थेतिअर्थार्थसहमेशोधनभवनस्वामिधनस्वामिनौ सहमचेत्
शुभैः शुभग्रहैः मित्रदृष्ट्यादृष्टौतदासुखतोलाभप्रदौस्यातांयदान्यैर्दृशाशत्रुदृष्ट्यादृष्टौ तदाला

नामस्यनिवित्तेवाबुधेज्यासितसंयुतेतैर्वादृष्टेधनंभूरिस्वकुलेराज्यमाप्नुयात्
८ अर्थार्थसहमेशौचेत्शुभैर्मित्रदृशेक्षितौबलिनौसुखतोलाभप्रदौयदैरदृशा
१० मित्रदृष्ट्यामुथशिलेर्योगपोसुखतोधनंतयोर्मुसरिफेवित्तनाशादुर्नयभीत
यः ११ जन्मनीज्योस्तियद्राशौसराशिर्वर्षलग्नगः

भोनवास्तीतिवाच्यं १० अथान्यौधनयोगतन्नाशयोगावाहमित्रदृष्टेतिअर्थागयोः अर्थशब्देनधन
भावः अगशब्देनवर्षलग्नंअनयोः स्वामिनौतयोमित्रदृष्ट्यामुथशिलयोगेसतिसुखतः यत्नेनावि
नाधनंभवति अथतयोः धनाधीशलग्नाधीशयोः मूसरीफयोगेवित्तनाशः दुर्नयेनदुष्टनीत्याभीति
र्भवतिअयमर्थस्तुपूर्वमेवव्यक्तीकृतः ११ अथान्यंधनयोगमाहजन्मनीतिजन्मनिजन्मलग्नेऽ
ज्योबृहस्पतिः यद्राशौयस्मिन् राशौअस्तिसएराशिर्यदिवर्षलग्नगः

सन् शुभग्रहैः स्वामिनावाहष्टः युक्तोवास्यात्तदानैरुज्यंस्वामित्वंवित्तंचस्यात् १२ अथान्योधनला भधननाशयोगावाहस्तावितिसूतोजन्मनि लग्नेजन्मलग्नेरविः वर्षेधनभावस्यस्तदाधनसौ ख्यदः स्यात् वित्तेधनभावेशनिश्चेत्तदाकार्यनाशादिकंस्यात् १३ अथशनिदोषापवादधनना शयोगावाह भ्रातृसौख्यमितिधनभावस्थशनौगुरुयुतेसति भ्रातृजनितंसौख्यंस्यात्शुभेक्षणा

शुभस्वामीक्षितवतोनैरुज्यस्वामिवित्तदः १२ सूतोलग्नेरविर्वर्षेधनस्थोधनसौ ख्यदः शनौवित्तेकार्यनाशोलाभोल्योर्थधनव्ययः १३ भ्रातृसौख्यंगुरुयुतेभूतयः स्युः शुभेक्षणात् क्रूरयोगेक्षणात्सर्वंविपरीतंफलंभवेत् १४ वित्तेशोजन्मनिगुरुर्व र्षेवर्षेशतांदधत् यद्भावगस्तमाश्रित्यलाभदोलग्नआत्मनः १५

त् नाहदृष्टोशनिंशुभ ग्रहाः पश्यतितदाभूतयः ऐश्वर्याणिस्युः अथधननाशयोगः पूर्वोक्तसर्वेषुधनलाभयोगेषुधन योगकारकान्ग्रहान् अतिक्रूरयोगेक्षणात्पापग्रहयोगेसति अथवादृष्टेसतितदाविपरीतंसर्वंफ लंभवेत् धनहानिःये नाह वित्तेशइतिसुहृत्तन इतिरवेन्दपादैरितियदिजन्मजन्मलग्नेगुरुर्बृहस्पति वित्तेशोधनभावस्वामीसन् वर्षेशतांवर्षस्वामितांदधत् प्राप्तः सन् यद्भावगः यस्मिन्भावेतिष्ठतितं

निरित्यर्थः अथजन्मकालेधनभावाधीशस्यगुरोर्वर्षलग्नादिद्वादशभावस्थानफलंश्लोकचतुष्ट)

ता॰
टी॰
८७
४८

भावंआश्रित्य लाभदो भवति तद्भावफलं ददातीत्यर्थः तदेवविशदयति लग्न इति लग्ने वर्तमानः स
न् आत्मनः शरीरस्य पुष्टिं करोत्ति वित्तधनभावे सुवर्णरूप्यादेः वृद्धिसहजर्क्षेग स्तृतीयभावगः भ्रात्रा
देः सुखं करोति सुहृत्स्विचतुर्थभावे पितृमातृद्दमादेवं आदिशब्देन ग्रामादिकं एतज्जनितसुखपंचमे
९६ पंचमभावे सुहृत्तनयततः सुखं षष्टे षष्टभावे अरिवर्गात् शत्रुसमूहात् हानिः अतिभीतिदः द्यूने

वित्ते सुवर्णरूप्यादे भ्रात्रादेः सहजर्क्षेगः पितृमातृद्दमादिभ्यो वित्तं सुहृदि पंचमे ९६
सुहृत्तनयतः षष्टेऽरिवर्गात् हानिभीतिदः स्त्रीभ्यो द्यूने ष्टमे मृत्युरर्थहेतुः यथोक्तगे ९७
खे नृपादेर्नृपकुलादायेंत्ये व्ययदो भवेत् इत्थं विमृश्य सुधिया वाच्यमित्यपरे जगुः
९८ इतिधनभावविचारः ॥

सप्तमभवने स्त्रीभ्यः सुखं अष्टमे अष्टमभावे मृत्युः अंग
के नव वर्षे भावे अर्थहेतुः धनार्जकः पथः मार्गः ९७ खेदशमभावे नृपादेः राज्ञः सकाश
त् भाग्यवृद्धिः आये एकादश भावे नृपकुलाद्धनवृद्धिः अंत्ये द्वादशम भावे व्ययदो भवेत्
सुधिया इत्थम मुना प्रकारेण विमृश्य विचार्य वाच्यं वक्तव्यं इति अपरे आचार्या जगुः उ
क्तवंतः ९८ इति धन भाव विचारः अथ तृतीय भाव विचारः तत्र सहज संबंधि शुभा
शुभ फल माह

अब्देशेऽर्के इति अब्देशो वर्षस्वामिनि अर्के सूर्ये सति सिते वा शुक्रे वा सति सबले बलिष्ठे सति पापवर्जिते पापग्रहयोगदृष्टिरहिते सति सोदराणां एकोदरप्रसूतानां भ्रातॄणां मिथः परस्परं सौख्यं स्यात् व्यत्ययात् उक्तवैपरीत्यात् तद्यथा सूर्ये शुक्रे वा वर्षस्वामिनि निर्बले सति पापग्रहैर्युते दृष्टे वा सति व्यत्ययं भ्रातॄणां परस्परं विरोधादिकं वदेत् १ अथान्यदाह रन्ध्रे कलिरिति सहजये तृतीयभाव

अथ सहजभावविचारः अब्देशेऽर्के सिते वापि सबले पापवर्जिते सौख्यं मिथः सोदराणां व्यत्ययात् व्यत्ययं वदेत् १ रन्ध्रे कलिः सहजपेऽब्दपतौ तयोर्वा जीवे बलनरहिते सहजे सहोत्थैः वैरं तृतीयभवनाधिपतीसराफे मांद्यं कलिं स्वजनसोदरतश्च विंद्यात् २॥

स्वामिनि वर्षस्वामिनि अब्दपतौ वर्षस्वामिनि सति रन्ध्रे अष्टमंगतदुष्टस्थानादिदोषसहिते सति कलिः युद्धादिना कलहः स्यात् तयोर्वा तितयोः सूर्यशुक्रयोर्वा मध्ये कश्चिक्त वर्षस्वामी भूत्वा रन्ध्रश्चेत् भवति तदा कलिः स्यात् जीवदृ तिसहजे तृतीयभावे बलेन रहिते निर्बले जीवे गुरौ सति सहोत्थैः भ्रातृभिः सह वैरं स्यात् तृतीय इति वर्षस्वामी तृतीयभावस्वामिना सह ईसराफयोगं चेत्करोति तदा मांद्यं शरीरे कष्टं स्वजनतः सुहृद्वर्गतः सोदरतः साक्षात् भ्रातृतः कलिं विंद्यात् अनुयात् ॥ २॥ २॥ २॥

अथान्यदाहयदेतियदावर्षलग्नस्वामिनावर्षस्वामिनातृसहजेश्वरेणतृतीयभावस्वामिनासह इत्थशा
लः मुथशिलयोगश्चेत्तदासहजाद्भ्रातुः सकाशात्सुखाप्तिः स्यात् अथवागुरुर्बृहस्पतिस्तृतीयेतदापिभ्राट
तः सुखाप्तिः सारइतितृतीयेतृतीयंभावेविधौचंद्रेसारेक्रूरेणभौमेनसहविद्यमानेसारेभौमेभामयुक्ते
चंद्रेसतिभ्रातृभिः सहकलहः स्यात् ३ अथान्योभातृसौख्ययोगमाहसहजेतिसहजेतृतीयभावेस्वामिसंयु
क्तेसहजस्वामिनासंयुक्तेअधिकारिणिपंचाधिकारिणांमध्येएकाधिकारीभूत्वासहजभावस्वामीसन्सहज

पदेत्थशालः सहजेश्वरणगुरुस्तृतीयेसहजात्सुखाप्तिः सारेविधौस्यात् कलहस्तृती
येदृष्टेयुतेनोगुरुणायदातो ३ सहजेसहजाधीशोधिकारिणिसमायतेः लग्नपोवा
मुथशिलेमिथः सौख्यंसहोत्थयोः ४ क्रूरेसराफेकलहः शनौभौमर्क्षगेरुजः नेर्द्वे
सप्तनुजेमाधंवदेत् सहजगेस्फुटम् ॥ ५ ॥

भावेतृतिष्ठतीत्यर्थः ताहृशेनसहजस्तमाप्तेवर्षस्वामिनोलग्नयोवावर्षलग्नस्वामिनोवामुथशिलयोग
श्चेत्करोतितदासहोत्थयोर्भ्रात्रोमित्यर्थः परस्परंसौख्यंस्यात् ४ अथाभ्रातः दौष्ट्यायोगमाहक्रूरेसराफइति
क्रूरेपापग्रहेईसराफेसहजभावेस्वामिनासहईसराफयोगंचेत्करोतितदाभ्रातृणांपरस्परंकलहः स्यात्
तथाशनौभौमर्क्षगेमेषवृश्चिकराशिस्थितेसहजभावेसतिः भ्रातरिरुजः रोगाः स्युः तथाअसजिर्भैमेज्ञ
र्क्षेमिथुनकन्याराशिस्थितः सन्सहः

जगे सहलग्नानस्थिते सति अनुजे भ्रातरि स्फुटं निःशंकं माद्यं रोगादिकं भवत्कथियेत् ५० ॥ अथा
न्यभ्रातृसौख्ययोगमाह मंदर्क्षग इति अस्रजिभौमे मंदर्क्षगे मकर कुंभराशिस्थितः सन् सहजे भ्रातृ
भावे सतितथा बुधे कुजर्क्षे मेष वृश्चिक राशिस्थे सति सहज भावगे एवं योगद्वये पिशुभैः शुभग्रहैर्यु
क्ते वा दृष्टे सति सोदराणाम कोदरप्रसूतां भ्रातृणां मिथः परस्परं बहुसुखं स्नेहः सुखं च स्यात् अयमे
को योग इति तन्न संभवति मंदकुजयोर्भिन्नराशिस्थयोरेकस्थानस्थितत्वासंभवात् ६ अथान्यं भ्रातृसौख्य

मंदर्क्षगे स्रजि बुधे कुजे दर्क्षे सहजे शुभैः युते क्षिते सोदराणां मिथः सौख्यं सुखं बहु ६ जन्मा
ब्दयो बुधसितौ सवलौ तृतीये सौदर्यवंधुगणसौख्यकरौ गुरुश्च ॥ योगद्वयं चाह जन्माब्दयोर

ति जन्मकाले वर्षकालयोः बुधशुक्रौ सवलौ सहजभावगो चेत्स्यातां गुरुश्च तथा गुरुर्बृहस्पतिः वलिष्ठः
सहजन्मवेतिष्ठति तदा सोदर्यो भ्रातृवधुगणः ततभिन्नापितव्यपुत्रादयस्तेषां सौख्य करौ सौख्यकरश्च
स्यात् अयमेको योगः वस्तुतस्तु जन्मनि लग्नेषु बुधे त्वधिकारणीति समखाक्ये जन्मनि अर्थात् जन्मल
ग्ने वर्षलग्ने बुधेश्शुक्रे वाधिकारवति ग्रहहरादाद्यधिकारवती सोदरेषु वृद्धिः अतएव जन्माब्दयोर्बुधे
सितौ सवले तृतीयेतियुक्तः पाठः उक्तं च स्मरसिंहे जन्मनि लग्ने च बुधे त्वधिकारिणी सोदरेषु वृद्धिः
स्यात् योगसुधानिधौ उभयत्र बुधे धिकारयुक्ते सहज

स्येप्यथ वंधुवृद्धि १ वे इतिजन्माब्दपाविति पाठमंगीकृत्यव्याख्यातं तत्रजन्माब्दपौजन्मलग्नवर्षे
लग्नस्वामीनौतत्रशब्दार्थाभावात् तादृगर्थेसमतेरभावात् अथान्यः सूत्यब्दयोजन्मकालेवर्षका
लयोरधिकारीसन्भृगुजः शुक्रः वलिनश्चंद्रस्याधिष्टितराशेःस्थितः सहजवंधुगस्यवृद्धिभवति ७
अथसहजेदुःखकुर्योगानाह पापान्वीति सजेसहजभावेपापान्वितेयुक्तेसतिसहमेशः भ्रातृसहम
स्वामी भावानाथ सहजभाव स्वामी अनयोरीक्षणेनरहितेतयोदृष्ट्याभावेसति सहजस्यदुःखंस्यात् ए

वीर्यान्वितेंदुग्रहगोभृगुजोधिकारीसूत्यब्दयोः सहजबंधुगणस्यवृद्ध्यै ७ पापान्वि
तेतुसहजेसहमेशभावनाथेक्षणेवरहितेसहस्यदुःखंएवंसहोत्थसहमेपिवदेत्तदीशे
दग्धौयदासहजनाशकरौविचिंत्यौ ८ तृतीययाब्दपतौद्युनस्थेलग्नेश्वरोवासहजे
विवारः॥

वमिति एवममुना प्रकारेण सहोत्थ सहमेपि भ्रातृसहमस्वामिभ्रातृभावस्वामी-
अभ्यामदृष्टे सति सहजे दुःखं वदेत् तदीशौ भ्रातृसहमस्वामिभ्रातृभाव स्वामिनौ यदा दग्धौ अ
स्तंगतादिदोष सहितौ सहतां तदा तदा भ्रातृणां नाशकरौ विचिंत्यौ ८ अथ सहजानामशुभ-
योंवाह तृतीय पापादित तृतीय पात् सहजभाव स्वामिनः सकाशात् अब्दपतौ वर्षस्वा
मिनि द्युनस्थे सप्तमस्थे अथवा लग्नेश्वरे वर्षे

लग्नस्वामिनिसहज भावस्वामिनः सकाशोत्सन्नमस्येसतिसहजेः सहविवादः कलहः स्यात् अय
मशुभयोगश्चथशुभयोगः जन्मनिजन्मकालेतृतीयपः तृतीयभावस्वामिनस्तत्रसहजभावेस्थितः
सन् शुभेक्षितेशुभग्रहैर्दृष्टेसतिताहृक वर्षे अब्द लग्नेसहजभावेस्थितः सन् शुभेक्षितश्चेतदास
होत्यतुष्ट्यैसोदराणांसंजोषायभवति ॥ इतिसहजभावविचारः अथचतुर्थभावविचारः तूर्येइति
तुर्येचतुर्थभावेरविपापग्रहैर्युतः पापदृष्टोवातदापितुः पीडाएवंविधश्चंद्रश्चेतदामातुःपीडास्या

तृतीययोजन्मनिताहृगब्देशुभेक्षितस्तन्सहोत्यतुष्ट्यै ॥ इतिसहजभावविचा
रः अथचतुर्थभावविचारः तूर्येरवीनूपितृमातृपीडापापान्वितोपापनिरी
क्षितोब्दजन्मस्थसूर्येक्षितेगतेर्कपुत्रेवमाननावैरकलीन्वपित्रा स्वंचंद्रेजन्मन्ये
वमुशातिंवंधौसौख्याधिपेप्रीतिसुखानिपित्रोः

त्वयोः स्थित्याउभयोरएपीडास्यादित्यर्थः अयमेकोयोगः अथान्यः जन्मस्यसूर्यदृगितेर्कपुत्रेज
न्मकालेसूर्योयस्मिनराशौवास्ति तस्मिन् राशौवर्षेशनिश्चेत्तदा अवमाननालोकेभ्यः पितृर्मानहानिः
स्यात् पित्रासहवैरेकलीस्यातां अथान्यदाहएवं अमुनारीत्याचंद्राक्रांतराशौशनौसतिजनिन्यामात्रा
सहवैरकलीस्यातां अथवंधौचतुर्थस्थानेसुखाधिपेचतुर्थभावस्वामिनिसतिमातापित्रोः ॥—

प्रीतिसुखान्युपयांति वदंति अथ तुर्याधिपे च तुर्यभावस्वामिनि वीर्यान्विते बलिष्टे वर्षलग्नस्वामिना
सह मुथशिले सति पित्रोः सौख्यमुपयांति २ अथ पित्रोरनिष्टयोगानाह सौख्यपतिर्जनुषि जन्मकाले सौख्या
धिपः चतुर्थभावस्वामी अब्दस्तयोः वर्षकालजन्मकालयोः नष्टबलः भावस्वामी नष्टबलश्चेत्तदा
पित्रोर्मातापित्रोरनिष्टकृत् दुःखं करोति अथ यो इति तयोर्मातापित्रोः सहमे दग्धे क्रूरग्रहैः पीडिते सति

तुर्याधिपे लग्नपतीत्थशाले वीर्यान्विते सौख्यमुपयांति पित्रोः २ सौख्याधिपो जनुषि
नष्टबलोऽब्दस्तयोः पित्रोरनिष्टकृद्यो सहमे तयोस्तु दग्धे तुरीयगृहगे च यदीथिहा
यां नाशस्तयोः सहमयोरपि दग्धयोः स्यात् ३ जन्मन्यब्दगृहं यच्च तत्पतिस्तत्पदेऽप
गौशान्यारौ क्रूरदोपित्रो न चेत्सौम्यनिरीक्षितौ ॥४॥

यदि मुथहाऽयः सकाशात् तुरीयगृह
गे च चतुर्थस्थानस्थे सति तयोर्मातापित्रोर्नाशः स्यात् तथा तयोर्मातापित्रोः सहमयोरपि दग्धयो
रस्तंगतादिदोषाक्रांतयोः पित्रोः पित्रोर्नाशः स्यात् ३ अथ पित्रोः क्लेशयोगावाह जन्मनीति जन्मनि जन्म
काले यदब्दगृहं चतुर्थस्थानं तत्र गतो यश्च तत्पतिः चतुर्थस्थानस्वामिनौ तत्पादे यगौ शान्यारौ तयोः
पदं स्थानं तत्र गतौ शनिभौमौ शुभग्रहैर्युतौ दृष्टौ वा चेन्न तदा पित्रोः क्लेशदौ ॥४॥

ता॰
टी॰
५४
५९

अथस्तुभास्तुभयोगावाह मातुरीतिमातुः पितुश्चसहमेत्थशालेवर्षलग्नस्वामिनाद्त्यशालेमुथशि लयोगेक्रतेसतिपित्रोः सुखान्यवगच्छेज्जानीहिइत्थमसुनाप्रकारेणुर्येपिचतुर्थभावेवर्षलग्नस्वामिना क्रतेमुथशिलयोगेसतिपितुः सुखान्यवगच्छअयमेकोयोगः अथाशुभयोगः मातृपितृसहमेअष्टमा धिपतिनावर्षलग्नादष्टमभावस्वामिनाचेत्क्रतमित्थशालेमुथशिलयोगेक्रतेसतिपित्रोः विपत्स्यात्

मातुपितुश्चेसहमेतनुयेत्थशालेतुर्य्येपिचेत्यमवगच्छसुखानिपित्रोः चेदष्टमाधिप तिनाव्रतिमित्थशालपित्रोर्विपद्भयमनिष्टक्रतेसरापे५ इतिचतुर्थभावः अथपंचम भावविचारः पुत्रायगोवर्षपतिर्गुरुश्चेत्सूर्यारसौम्योशनसोथवेत्यम् तत्पुत्रसौख्याय खलार्दितास्तदुःखप्रदापुत्रतएवचिंत्या १॥

अनिष्टखगेसरापेयदिमातृपितृसहमेशत्रुक्त तईशरापेयोगेसतिपित्रोः विपत्स्यात् इतिचतुर्थभावः अथपंचमभावः अथपुत्रसंबंधिशुभाशुभफ लमाहपुत्रापगइति चेद्वर्षेयतिवर्षस्वामीगुरुर्बृहस्पतिः पुत्रायगः पंचमेकादशस्थानस्थितश्चेत्त दासत् पुत्रसौख्यायभवेत् अथवासूर्यः आरोभौमः सौमोबुधः उशनाम्शुक्रः एषांमध्येयः कश्चिद्व र्षस्वामीग्रहः सन् पंचमेकादशस्थानस्थितोवास्यात्तदेत्यं सत्पुत्रसौख्यकर इत्यर्थः अथअयतेग्र हाः गुरुभौमसूर्यबुधशुक्राः खलैः पापग्रहैरर्दिताः पीडिताः श्चेतस्युस्तदापुत्रतएवदुःखप्रदाः चिंत्याः १॥

अथपुत्रप्राप्तियोगमाह पुत्रइतिपुत्रे पंचमभावेसुतस्यसहमेपुत्रसहमेसवलेवलिष्टेसतिसुताप्तिः पुत्र प्राप्तिस्यात् यदितत्रपंचमभावेवर्षेट् वर्षस्वामीसौम्येस्थितोपिशुभग्रहैर्दृष्टेसतिअतिसुखंस्यात् अयमेकोयोगः अथान्यः सकुजोवुधः भौमयुक्तोवुधश्चेत् शुभग्रहे शुभग्रहाणांचंद्रवुधगुरुशुक्राणां राशौ कर्कमिथुनकन्याधनुमीनतुलानांमध्येयस्मिन्कस्मिंश्चिद्राशौस्थितः सन्सौम्येक्षितः शुभग्रहे

पुत्रेसुतस्यसहमेसवलेसुताप्तिः सौम्येक्षितेप्यतिसुखंयदितत्रवर्षेसौम्येक्षितः सुतग्रहेस कुजोवुधश्चेत्सुत्रायगः सुतसुखंविवलः सुतार्ति २ जीवोजन्मनियद्राशावब्देषुसुतगो वलीपुत्रसाख्यायभौमोज्ञोवर्षेशोत्रसुताप्तिदः ३॥

दृष्टः सन्सुत्रायमः पंचमैकादशस्यानस्थि तः सुतः सुखंपुत्रसुखंकरोतिचेत् भौमयुक्तोवुधः विवलः निर्वलः प्रोक्तस्थानेषुचेत्तदासुता र्तिः सुतस्यअर्तिरोगंकरोति २ अथान्योप्राप्तियोगमाह जीवइतिजन्मनिजन्मकालेजीवोवृह स्पतिः यद्राशौ यस्मिन् राशौ अस्ति सराशिरब्दे वर्षकाले सुतगः पंचमस्थानेस्थितः सनव लीवलिष्टश्चेद्भवतितदापुत्रसौख्यायभवति अयमेकोयोगः अथान्यः भौमोवुधोवावर्षेशः स न् अत्रपंचमभावेसतितदासुताप्तिदः स्यात् ॥ ३ ॥

अथपुत्रप्राप्तिपुत्ररोष्मयोगावाहयत्रेज्यइतिजनुषिजन्मकालेयत्रयुस्मन्स्थानेईज्योवृहस्पतिरस्ति
तत्स्थानंवर्षकालेविलग्नग्रहेचेत्लग्नस्थानंचेत्स्याततदापुत्राप्तैपुत्रप्राप्तैभवतिइत्थममुना
प्रकारेणवुधसितयोप्यूह्यंयथावुधःशुक्रोवायस्मिन्राशौतिष्ठतिसराशिर्वर्षकालेलग्नस्थोभवे
त्सापुत्राप्त्यैभवतिअयंशुभयोगःअथाशुभयोगःजनुषिजन्मकालेयद्राशौयस्मिन्राशौशनिःकु
जश्चस्यात्सराशिर्व्देवर्षकालेतनुसुतगोभवेत्तद्यथाजन्मकालेनशन्याक्रांतराशिःजन्मकाली

यत्रेज्योजनुषिगृहेविलग्नमेतत्पुत्राप्तौवुधसितयोरपीत्थमूह्यम्यद्राशौजनुषिश
निःकुजश्चसोब्दपुत्रार्तिंतनुसुतगःकरोतिनूनं४पुत्रोपुन्यसहमंपुत्रान्त्येशुभ
दृष्टियुकलग्नत्र्श्वरोपुत्रेपुत्रदोवलिनौपदि५

नभौमाक्रांतराशिर्वावर्षेलग्नेगोभवतिअथवावर्षलग्नात्पंचमस्थानेजन्मकालीनशन्याक्रांतराशिः
भौमाक्रांतराशिर्वास्यात्अथवाद्वयोरेकत्रावस्थानंस्यात्तदानूनंनिश्चयेनपुत्रार्तिंपुत्रपीडांकरोति
४अथान्यंसुतप्राप्तियोगमाहपुत्रइतिपुत्रेवर्षलग्नात्पंचमस्थानेपुण्यसहमंशुभग्रहैर्दृष्टंयुक्तंवा
स्यात्तदापुत्राप्त्यैपुत्रप्राप्तयेभवतिअयमेकोयोगःअथान्यपुत्रेवर्षलग्नात्पंचमस्थानेचवर्षलग्न
स्वामीपंचमभावस्वामिनौयदिवलिनौचेतिष्टतःतदापुत्रदोभवतः५

अथशुभाशुभयोगावाहचंद्रेइतिसुतेवर्षलग्नात्पंचमस्थाने चंद्रः बृहस्पतिर्वाशुक्रोवास्वोच्चग
तः सन् चेतिष्ठतितदासुतदः पुत्रप्राप्तिंकरोतिअयंशुभयोगः अथाशुभयोगः वक्रीतिवक्रीभौमः
सुतस्थः वर्षलग्नात्पंचमस्थानेचितेष्ठतितदाउत्पन्नसुतनाशनः ६ अथपुत्रप्राप्तितन्नाशयोगा
वाहसुताधिपः पंचमभावस्वामीभार्गवः शुक्रः अब्देवर्षकालेपुत्रपंचमस्थानेसन् विलग्नाप

चंद्रोजीवोथवाशुक्रः स्वोच्चगः सुतदः सुतेवक्रीभौमः सुतस्थश्चेदुत्पन्नसुतना
शनः ६ पुत्राधिपोजन्मनिभार्गवोब्दे पुत्रेविलग्नाधिपतीयशाली पुत्रप्रदेसमंद
पदस्थपुत्रेपापाधिकारीहितआत्मजार्तिः ७ पद्माशिगोग्रहः स्तौसराशिस्त
त्पदाभिदः ॥

तीत्यशालः वर्षलग्नस्वामिनासहमुथशियोगश्चेत्तदोपुत्रदोभवति अयंसुतप्राप्तियोगः अथाशु
भयोगः जन्मकालंसदपदस्थपुत्रेमंदः शनिः तस्यपदंस्थानंअत्रवर्षेचेत्पंचमभवेत् पापाधिकारी
पापग्रहः पंचाधिकारिणांमध्येवर्तमानः सन् ईहितदृष्टेसतिआत्मजार्तिः आत्मजः पुत्रस्तस्या
र्तिः पीडास्यात् ७ अथान्यदाहयद्माशिगइतिस्तौजन्मकालेपद्माशिगोग्रहः यस्मिन् शोतिसरा
शिस्तस्यपदाभिधः ॥

स्थानवाच्यः फलमाह वलीतिसराशिर्वर्षेतद्भावगः सन् वलीचेत्तदाजन्मोक्तसौख्यायजन्मकाली
नतद्भावोत्थशुभफलदो भवति अन्यथा तदुःखदः वर्षेउक्तस्थानस्थितराशिर्निर्वलश्चेत्तदातद्
भावजनितशुभमशुभंस्यादित्यर्थः १९ इतिपंचमभावविचारः अथषष्टभावविचारः मंदेद्व्यङ्इतिमं
देद्व्शनौ अव्द्पेवर्षस्वामिनि अन्त्जुगतोवक्रिणिपतिते पापग्रहैः पीडिते अरिगेनष्टस्थानगतेसति

वलीजन्मोत्थसौख्यायवर्षेतदुःखदोन्यथा ८ इतिपंचभावः अथषष्टभावविचारः मं
देव्द्येन्त्जगतोपतितेनेरुगार्त्तिः स्यात्सन्निपातभवभीररिगेत्रशूलंगुल्मादिरोगविषम
ज्वरभाग्गुरौतुपापादितेनिलरुजोमकवूलशून्ये १ स्यात्कामलाख्यरुगपीत्थमसृ
ज्यसृग्भीः॥

सर्गार्तिः रोगेन आर्तिः पीडास्यासन्निपातवातपित्तकफात्मकः एवंयुगपद्देवदो
षत्रयस्यउत्पत्तिस्तदुद्भवाभीर्मरणं शूलंशूलपीडागुल्ममुदररोगः आदिनेत्ररोगविषमज्वरः ए
भ्यः रोगेभ्यः भीभयंस्यात् एवंगुरौवर्षस्वामीभूत्वा षष्टस्थानेगेवक्रिणिपापार्दितेसति मकवूल
शून्येचंद्रमसासहमकंवूलयोगरहितेसत्यनिलरुजोवातयोगाः स्युः १ अथान्यद्शुभफलमाह
स्यादितिस्यात्कामलाख्यरुगपीतिपूर्वेणसंवंधः इत्थमिति अनुनाप्रकारेण असृजिभौमेवर्षस्वा
मिनिषष्टगेपतितेवक्रिणिसतिसृग्भीः रक्तविकाराख्योरोगः रवावित्यमिति

रवौवर्षस्वामिनिषष्ठस्येपतितेपित्तंस्यात् रिष्फगर वौताहृशर वौद्वादशस्येहशिनेत्रशूलरोगःस्या
त् तथाताहृशोभृगौ शुक्रेरिपुगेषष्टस्थानस्थेपुनःपित्तरोगःस्यात् यदाजन्मनरराशौ अरौलष्टेतन्नरासि
ते शुक्रेभयेह्नितयुतेपिभयेनषष्टेभावस्वामिनाहृष्टेयुक्तेपिश्लेष्माख्योरोगःस्यात् एवंविधेचंद्रेरि
गेषष्टस्थानगेप्रतिकफसंवंधीरोगःस्यात् २ अथवुधस्यफलमाह एवमितिएवममुनाप्रकारेण

पित्तचरिष्फगरवौहृशिशूलरोगःपित्तंपुनारिपुग्रहेत्र भृगौजन्मभेरौश्लेष्माभयेह्नितयु
तेपिकफोरिगन्दौ २ एवंवुधेपापयुतेव्दपेरौवातोत्थरोगोजनिलग्ननाथःपापोव्दपे
नद्युतहृष्टिहृष्टोरोगप्रदोमृत्युकरःसपापः ३ मृत्यार्किभेलग्नगतेरुदृशीतोस्मर
कभयं॥

वुधेव्दपे वर्षस्वामीनिभृत्वा अरौषष्टस्थानेपापग्रहैर्युक्ते वक्रेणिसतिवातजनतरो
गःस्यात्जनीतिजनजन्मकालीनलग्ननाथःलग्नस्वामी पापग्रहेःसन् अव्दपेनवर्तमान्यवर्ष
स्वामिना द्युतहृष्टिहृष्टोचतुर्थदशमैकसप्तमहृष्ट्याहृष्टःतदारोगप्रदःस्यात्सपापःमृत्युकरःसज
न्मकालीनलग्नस्वामीपापग्रहःस्ववर्षकालेपापग्रहयुक्तोवर्षस्वामीनाद्युतहृष्टोमृत्युप्रदःस्यादि
त्यर्थः ३ अथशनिकृतारिष्टयोगमाह मृत्यार्किभेइतिमृतोजन्मकालेअ

किंभेशन्याक्रांतराशौलग्नगतेवर्षकालीनलग्नस्थेसतिरुग्दृपीतोसरुग्भयंस्यात् यस्मिन्जन्मकालीन
शन्याक्रान्तराशौवर्षकालेशनिनायुतदृष्टादृष्टेसतिमृत्युमादिशेत् ४ अथभौमकृतअरिष्टयोगमा
हएवमितिएवममुनाप्रकारेणजन्मकालेयस्मिन् राशौतिष्ठतिसराशिर्यदिवर्षेवर्षकालीनलग्न
गतोभवेत् भौमोयुतदृष्टाभौमेनयुतदृष्टादृष्टश्चेत्तदारक्तेत्यादिरोगाः इत्यंतंफलंस्पष्टंसलग्नगत

शनान्वितेयाप्यतास्यात्सपापेमृत्युमादिशेत् ४ अथभौमेयुतदृष्टारक्तपित्तरुजोग्नि
भीः ततोन्येवहुलारोगाः शुभदृष्टेरुगल्पता ५ लग्नाधिपाव्दपतिषष्ठपतीत्थशालो
रोगप्रदः खचरधातुविकारतः स्यात् कांदर्पिकामयभयंपतितेसितेर्कस्थानेप्यष
ष्टरहरुक्सहमंसपापं ६ सपापेगुरौरध्रगेलग्नआरेसतंप्राप्तिमूर्छागनाशः

राशिः शुभग्रहैर्दृष्टश्चेत्तदारोगाल्पतास्यात् अथान्यदरिष्टयोगमाहलग्नाधिपेतिलग्नाधिपः वर्ष
लग्नस्वामीअव्दपतिर्वर्षस्वामिपतिः षष्ठभावस्वामीअनयोः परस्परमित्यसालोमुथशिलयोगश्चे
त्तदाखचरग्रहयुक्तेचेत्स्यात्तदापिमदनसंवधीरोगः स्यात् जन्मकालेशुक्रोयस्मिन् राशावस्तिसरा
शिर्वर्षकालेषष्ठोभावः स्यात्तस्मिन् भावेस्थितेसतितथाशुक्रेपतितेषष्ठाष्टमद्वादशस्थानान्यतमस्थे
सतिकांदर्पिकामयभयंमदनसंवंधीरोगः स्यात् ॥

अयमर्थोमूलवाक्यासारेणतत्पाकंचशुक्रेस्थानेसूतेर्येशुक्रेपतितेगदःस्मरव्यसनादितिअथान्यौरोगो
त्पत्तियोगावाहसपापेइतिसपापेपापग्रहयुक्तेगुरौरंध्रगेवर्षलग्नादष्टमस्थानेसतिआरभौमेलग्नेसति
सतंद्रास्तिमूर्छातंद्राआलस्यंतत्सहितामूर्छाचेष्टाराहित्यंभवतिसचंद्रेचंद्रयुक्तभौमेलग्नस्थेपुनः
चंद्रयुक्तपापयुक्तगुरावष्टमस्थेसतिअंगनाशःकुत्रचिद्दृगस्यविशेषणनाशःस्यात् अपमेकोयोगः
अथान्यः सूतिकेंद्रेसूतौजन्मकालेयानिचत्वारिकेंद्राणितेषुखलाःपापग्रहाःस्युस्तेअब्देलग्नेवर्ष

सचंद्रेखलाःसूतिकेंद्रेऽब्दलग्नेरुगाप्त्यैकफोद्यंघ्रिगैरीक्षमाणेसितेस्यात् ७ दि
नेऽब्दप्रवेशोविलग्नेऽब्दसूत्योप्यदृक्केहद्दाग्रहाद्योधिकारःखेर्वाकुजस्यात्त्रयी
उज्वरात्स्याद्दशासौम्यखेटेत्ययान्तेसुखाप्तिः ८

कालीनलग्नेस्युस्तदारुगाप्त्यैभवतितथासितेशुक्रेव्यंघ्रिगैर्नराशिस्थैःपापग्रहैरीक्षमाणेदृष्टेस
तिकफोत्पत्तिःस्यात् अथान्यदाहदिनइतिदिनेदिवसेअब्दप्रवेशोवर्षप्रवेशःस्याद्यदाविलग्नेऽब्दसू
त्याः वर्षकालजन्मकालयोर्लग्नस्थस्यरवेःसूर्यस्यवाकुजस्यभौमस्यभौमस्यवादृक्केद्रेकाणेहद्दा
स्वग्रहाधिकारःप्राप्तःस्यातदत्रवर्षेज्वरात्पीडास्यात् अयमर्थःपंचाधिकारिणांमध्येअधिकारीभू
त्वासूर्यःभौमोवालग्नेसतिज्वरात्पीडास्यादित्यर्थःदशासौम्यखेटेत्ययान्तादृशिलग्नेशुभग्रहे

हेहष्टेसति अंतेपरिणामेसुखाप्तिः स्यात् ८ अथरोगनाशरोगोत्पत्ति योगावाह निशीतिनिशिरात्रौ सूतौजन्मेश्वेतस्यात् तत्राकर्द्धमानेशुक्लपक्षीयउपचीयमानेचंद्रे वर्षकालीनभौमेन सहइत्थशालतः मुथशिलयोगेसति रुकरोगः नश्येत् नाशंप्राप्नोति यदि शुक्लपक्षस्थोपचीयमानेचंद्रेमंदेत्थसात्वात् शनिनासहमुथशिलयोगेसति रुकरोगः एधते वृद्धिंप्राप्नोति व्यत्योयेन्मथेतिदिवसे

निशिसूतौवर्द्धमानेचंद्रे भौमेत्थशालतः रुग्नश्येदेधतेमंदेत्थशालाद्यत्थयोन्यथा

९ रवावीहशिवित्केतुयुतेवर्दनिखिलंगदाः अधिकारीवलीसूतावब्देकेतुज्ञशुक

तथा१० चतुर्थेस्तेचमुथहाज्ञुतहृष्याशनीक्षिताश्शूलपीडापापरवगेहष्टेतत्परि

णामजं ११॥

जन्मस्यात् शुक्लपक्षस्थचंद्रे भौमेनसहमुथशिलयोगेसतियोगवृद्धिः स्यात् पुनस्तादृशेचंद्रे शनिनासहमुथशिलयोगेसति रोगनाशः स्यादित्यर्थः अथान्यद्रोगद्वयमाह रवावतिकेतुबुधयुतेरवौईधशेभौमेन सहमुथशिलयोगेसति अब्दंनिखिलंसंपूर्णं वर्षगदः रोगः स्यात् अयमेकोयोगः अथान्यः सूतौजन्मकाले कश्चित् ग्रहः अधिकारीवाबलीसन् सग्रहः अब्देवर्षकाले केतुः बुधशुक्रश्चेत्तदा संपूर्णं वर्षं रोगप्रदः स्यात् १० अथशूलयोगमाह चतुर्थेइ तिवर्षलग्नेचतुर्थस्थाने अस्ते सप्तमस्थाने वामुथहास्यात् शनि

ता॰
टी॰
६३
५८

नाच्युत दृष्ट्या शत्रुदृष्ट्या चतुर्थस्थानेमेकसप्तमदृष्ट्या दृष्टिताहृष्यासतीतदा मूलपीडा स्यात् तादृशीभुथ
हायापापग्रहैहृष्टासतीतत्परिणामजातस्य परिणामः मूलस्यनाशः ततोजातामूलनाशोत्तरं मूलपीडा
स्यादित्यर्थः २१॥ अथसकलग्रहवशेनपिडकादियोगमाहजन्मस्थेतिजन्मकालेजीवसितराशिगते
महीजेजीवोबृहस्पतिः सतिः शुक्रोवायस्मिन् राशौवस्ति वर्षे तस्मिन् राशौगे महीजेभौमेभ्वेत स्यात्कीदृ

जन्मस्थजीवसितराशिगतेमहीजेसूर्यांशगेपिडकशीतलिकादिमाद्यम् शीतोत्थगंडभव
रुक्चासबुधेचसंदेकुष्टंभगंदररूजोपिसगंडमाला २२ जनालग्नेंथिहानाथौषष्टौपापान्वि
तेदितौनिर्वलौज्वरपीडांगवैकल्याद्यतिकष्टदौ २३॥

शेभौमः सूर्यांशगेत्संगतोभवेत् स
पिडकशीतलिकादिमाद्यं शीतोत्थगंडभवरुक्स्यात् बुधेच संदे एवं जन्म कालेजीवसिताधिष्टित
राशौचंद्रयुक्त बुधे सति कुष्टं भगंदर रुजापि सगंड मालाख्या रोगाः स्युः २२ अथान्यानिष्टयोगमाह
जन्मेति जन्म लग्नें थिहानाथौ जन्म लग्न स्वामि मुथहा स्वामिनौ वर्षलग्ना
त्षष्टौ पापान्विते दितौ पापग्रहैः युतौ दृष्टौवानिवलौ
स्यातांतराज्वरपीडांग वैकल्याद्यतिक
ष्टौभवेतां॥२३॥

तं अत्र गुरुयुक्तेन वाभार्येति पाठः साधुः पूर्वग्रंथानुरोधात् उक्तं च जातकसारे संयुक्ते सुरपूजितेन ववधू
प्राप्तिश्च सद्दृशत इति वामनः गुरुयुक्तेन वाभार्या संतति त स्वरितं ततः ताजिकयोगसुधानिधौ गुरुयु
तेपि च न् तनवल्लभाभवति तत्र च संततिरास्तु न इति २ अथ स्त्रीसौख्यविवाहयोगावाह जन्मेति
जन्मलग्नाधिपे जन्मलग्नस्वामिनि वर्षलग्नलान्विते वलिष्ठे अस्तस्थे सप्तमस्थाने सति दारसौख्य
स्त्रीजनितं सुखं स्यात् जन्मकाले शुक्रर्दं शुक्रो यस्मिन् राशौ तिष्ठति स राशिरव्दे वर्षकाले अस्ते स

गुरुदृष्ट्यानवाभार्य्यासंततिस्त्वरितंततः २ जन्मलग्नाधिपेऽस्तस्थेदारासौख्यं
वलान्वितेजन्मशुक्रर्दमस्तेब्दे स्त्रीलाभायसितेव्दये ३॥

व्दयेवर्षस्वामिनि सति तदा स्त्रीलाय स्त्रीप्राप्तये भवति इदमवधेयं जन्मशुक्रर्दमित्यत्र जन्मशुक्रर्द
मस्ते तत्र चेत् शुक्रोव्दयः वर्षस्वामी तदा स्त्रीसुखमित्यत्र संमतेरभावः अथासमरसिंहः जातक
लग्नाधिपौ वर्षैस्थे वलिनि दारसुखं शुक्रस्थाने वर्षे परिणयाति ग्रहस्थतां याति ताजिकालंका
रे जनुलग्नाधीशोशरदमदसंस्थे वलयुते भ्रंशयोषित्तोषः सितगृहे स्यात्परिणयः ताजिकयोगसु
धानिधौ जननलग्नयतोशरदस्तगे वलयुते प्रमदासुखमीरितं जननशुक्रगराशिगते जनस्तनुप

तौ सबले परिणायनं वामनः जन्मलग्नाधिपे वर्षेलग्नात्सप्तमगे सति उदिते सबलं चैवं दारसौ-
ख्यं प्रजायते शुक्रोजन्मनि यद्राशौ वर्षलग्नेश्वरो यदि तद्राशौ सप्तमस्थेपि पुंसः परिणयः तदे
ति अत्र पूर्वपरामर्शात् लग्नेश्वरो जन्मलग्नेश्वर इति न च वर्षेश्वरो यदीति पाठः पूर्वश्लोकवि
रोधात् तादृगर्थे संमतेरभावाच्च एवं सति निर्मूलं मूलमिति मंतव्यं ३ अथ स्त्रीलाभयोगं स्त्री
कष्टयोगं चाह लग्नेति लग्नं वर्षलग्नं अस्तं सप्तमभावः अनयोर्नाथयोः स्वामिनोः इत्थसाले मु

लग्नास्तनाथयोरित्थशाले स्त्रीलाभमादिशेत् सहमेशो भावयोर्वा विनष्टः कष्टदः स्त्रि
यः ४ नष्टेंदौ शुक्रपद्गे मैथुनं स्वल्पमादिशेत् ॥

थशिलयोगे सति स्त्रीलाभं विवाहादिद्वारा-
स्त्रीप्राप्तं आदिशेत् कथयेत् सहमेश इति शहमेसः स्त्रीसहमस्वामी भावयो भावा सप्तमभावस्वा
मी वा विनष्टश्चेत्तदा स्त्रियाः कष्टदः दुःखदो भवति विनष्टग्रहलक्षणं वामनेनोक्तं क्रूराक्रांतः
क्रूरयुतः क्रूरदृष्टश्च यो ग्रहः विरश्मिर्ताम्रसन्नश्च स नष्टो बुधैः स्मृतः इति ४ अथ स्वल्पस्त्रीसुखम
हित्सुखयोगावाह नष्टेंदौ वति शुक्रपद्गे शुक्राधिष्ठितराशिस्थिते वर्षे नष्टे प्रागुक्तविनष्टलक्षणा
क्रांते इंदौ चंद्रे सति स्वल्पमैथुनमादिशेत् कथयेत् तथा जन्मशुक्रर्गेगे भौमः जन्मकाले शुक्रो यस्मिन्
राशौ गवस्तत्तस्मिन् राशौ वर्षकाले भौमः बली भवेत् दा स्त्रीसुखोत्सवकृत् ५ ॥

ता॰
टी॰
६८
५८

अथस्त्रीसौख्ययोगचतुष्टयमाहजन्मास्तये इतिजन्मकालीनलग्नात्सप्तमस्थानस्वामिनिअब्दपसितेनव
र्षस्वामीशुक्रः तेनयुगीह्निते युक्तः दृष्टोयात दास्त्रीसंगमोबहुविलाससुखः प्रधानः स्यात् अगमेको
योगः केंद्रइतिजन्मकालेशुक्रभस्थेशुक्राधिष्ठितराशिस्थितेवर्षकालीनगुरौकेंद्रत्रिकोणगेसति
स्त्रीसौख्यमुक्तंअयंद्वितीयोयोगः इतिहद्दाविवाहयोश्चेतिइतिअमुनाप्रकारेणवर्षलग्नेयः आगतः
हद्दास्वामीसजन्मकालीनशुक्राक्रांतराशिगतः सन् केंद्रत्रिकोणगोभवेत्तदास्त्रीसौख्यं स्यात्समयंत्र

जन्मशुक्रर्लगोभौमः स्त्रीसुखोत्सवकृद्बली ५ जन्मास्तयेब्दपसितेनयुगीह्नि
तेस्यात् स्त्रीसंगमोबहुविलाससुखप्रधानः केंद्रत्रिकोणगगुरौजनिशुक्रभ
स्थेस्त्रीसौख्यमुक्तमितिहद्दविवाहयोश्च ६

तीयोयोगः तथावर्षकालेयद्विवाहसहमं तत् स्वामीवाजन्मकालीनशुक्राधिष्ठितराशिगतः सन्केंद्र
त्रिकोणगोभवेत् तदापिस्त्रीसौख्यंस्यात्अयंचतुर्थोयोगः स्यात् केंद्रमित्यत्रलग्नंविहायचतुर्थसप्त
मदशमान्युक्तानिसमरसिंहेतथाकंचशुक्रस्थानेवास्यान्नवमेसेपंचमेचतुर्थेखेजीवे सतिपूर्ण
फलंविवाहपेहद्दनाथेचफलसाम्याद्युक्तिलाघवात् ग्रंथकृतालग्नमुक्तमितिबोध्यं ६ अथस्त्री
क्लेशविवाहयोगावाह अधिकारीतिपंचाधिकारिणांमध्येयस्यकस्यचिदधिकारिणः षष्ठस्थेस्थाने

अर्के

सूर्येसतिस्त्रीभ्यो ऽ निशंनिरंतरं व्याकुलतास्यात् एवंइंथिहाधिकृतस्थानेइंथिहामुथहाअधिकृतस्या
नेअधिकारीग्रहस्यस्थानेगुरुदृष्ट्यागुरुणादृष्टासतीविवाहकर्त्रीस्यात् ७ अथस्त्रीक्लेशयोगावाहइं
थिहेतिघूनेवर्षलग्नात्सप्तमस्थानेइंथिहामुथहाअर्कारयुक अर्कः सूर्यः आरोभौमः तेनयुक्ताचेत्तदा
स्त्रीपुत्रेभ्यः कष्टंभवेत् पापग्रहदृष्ट्याविशेषतः कष्टंस्यात् अयमेकोयोगोअथान्यः स्त्रीसत्क्रूरितेपापा
क्रांतेवर्षलग्नात्सप्तमस्थानेसतिस्त्रीपुत्रेभ्यः कष्टस्यात् पापग्रहैर्दृष्टेसतिविशेषतः कष्टंस्यात् के

अधिकारिपदस्थेर्केस्त्रीभ्योव्याकुलतानिशंइंथिहाधिकृतस्थानेगुरुदृष्ट्याविवा
हकृत् ७ इंथिहार्कारयुक्घूनेक्रूरितेसहमेस्त्रियाः स्त्रीपुत्रेभ्योभवत्कष्टंपापदृ
ष्ट्याविशेषतः ८ सुतेद्यूनाधिपः शुक्रोऽब्देघूनेवलवान्भवेत् लग्नेशेनेत्यशाल
श्चेत्स्त्रीलाभंकुरुतेध्रुवम् ९ ॥

चित्तुक्रूरिते इत्यस्ययोगद्वयेप्यन्वयः क्रूरितेघूनेइंथिहार्कारयुगितिवदंतितन्नअकारयुगित्यनेनैव
घुनस्यक्रूरितत्वोपपत्तेः अन्यथायोगद्वयकल्पनमितिव्यर्थंस्यादिति ८ अथविवाहयोगमाहसु
ताविति सुतेजन्मकालेघूनाधिपः सप्तमभावस्वामीशुक्रः अब्देवर्षकालेवलवान्वलिष्टः सन् घू
नेसप्तमस्थानेभवेत् लग्नेशेनेत्यशालश्चेत् वर्षलग्नस्वामिना सहमुथशिलयोग ऽऽऽऽऽऽऽ ६९

श्चेतदास्त्रीलाभंसुखंचकुरुते ८ ॥ अथत्रीन् स्त्रीप्राप्तियोगनाह भौमेइति भौमेव्ययेवर्षस्वामिनि
सितदृशाशुक्रेणदृष्टेसतिस्त्रीलाभयोगएकः तथाशुक्रेव्ययेवावर्षस्वामिनिकुजेतथाभौमेनदृष्टे
सतिस्त्रीलाभयोगोद्वितीयः अथवादारसहमेवर्षीयस्त्रीसहमेतदृष्टेताभ्यांशुक्रभौमाभ्यांदृष्टेस
तिस्त्रीलाभोनिश्चयेनभवति अयंतृतीयोयोगः १० अथपुनर्विवाहयोगद्वयमाह सूताविति वाप्र-
कारांतरेणसूतौजन्मकालेदारसहमेस्त्रीसहमेनदृष्टेशुक्रभौमाभ्यांदृष्टेसतियोषित् स्त्रीआप्यते

भौमेव्ययेसितदृशाशुक्रेव्ययेवाकुजेतथा तदृष्टेदारसहमेस्त्रीलाभोभवतिध्रुवं १०
सूतौवादारसहमेतदृष्टेयोषिदाप्यतेस्वामिदृष्टंस्त्रीसहमंदृष्टिशुक्रोविवाहकृत ११
सूतौधूनाधिपेवर्षसहमेपोस्त्रियाः सुखम्॥

उक्तंचसमरसिंहेजन्मनिदृष्टेसत्यांस्त्रीसहमाप्तौ
चपरिवारः अयमर्थः अथावर्षकालेस्त्रीसहमंतथैवजन्मकालेप्रश्नकालेचस्त्रीसहमंकार्यमिति
संज्ञातंतत्रेसहमप्रकरणेउक्तमस्ति अयमेकोयोगः अथान्यः स्त्रीसहमंस्वामिनादृष्टंशुक्रदृष्टंतदावि
वाहकृत १२ अथस्त्रीसुखप्राप्तयोगावाह सूताविति सूतौ जन्मकालेधूनाधिपेसप्तमभावस्वामि-
नि वर्षे वर्षकाले सहमेपे स्त्रीसहम स्वामी भवेत्तदास्त्रियाः सुखं स्त्रीतः सुखंस्यात् ॥

अयमेकोयोगः अथान्यः जन्मास्तये जन्मकालीन सप्तमभाव स्वामी इंथिहानाथः वर्षकालीनमु
थहा स्वामीवर्षेशः वर्ष स्वामी एतेखेदशमस्थाने तथाधूने सप्तमेस्थानेस्युस्तदास्त्रीतः सुखंस्यात
उक्तंच ताजिकयोगसुधानिधौजन्मास्थनाथेऽब्दपतौच मुंथेशेस्तंगते व्योमगते पितद्वत् अतएव
वर्षेशास्त्वेन् धूनेतथेतिपाठकल्पनमपिनिरस्तं १२ अथसप्तमस्थानस्यमार्गस्थानत्वात् विदेशग

जन्मास्तयेन्थिहानाथवर्षेशाः खेद्युनेतथा १२ मुथहातोधूनेसंस्थः स्वगृहोच्चगतः श
शीविदेशगमनंकुर्यात् क्लेशः पापेक्षणाद्भवेत् १३ इतिजायाभावविचारः अथाष्टमभा
वविचारः भौमेऽब्दपेक्रूरहतेऽयस्थाघातोवलोसिते॥

मनयोग माह मुपहामुथहात इति
वर्षे स्वगृह स्वोच्चगतः शशी चन्द्रः मुथहाधिष्टित स्थानात् धूनस्था सप्तमस्थाने स्यात्त
दा विदेशगमनं कुर्यात् एतादृशश्चन्द्रः पापेक्षणात् पापग्रहे दृष्टश्चेत्तदा क्लेशदो भवे
त् १३ इति सप्तम भाव विचारः अथ अष्टमभाव विचारः भौम इति भौमे अब्दपे वर्षस्वामि
निसति क्रूर हते युद्धादिना पीडिते वलोयत्किंचित् स्थानगते सति अयसालेहो नघातोभवत् त
थाभौमे अग्निभेवन्हि राशौसंत्तातंत्रोक्तमेष

सिंहधनुषाख्येस्थितेसतिअग्निभीः वन्हिसंबंधाद्भयंभीतिर्भवतितथाभौमेद्विपदभेमिथुनकन्याधनुःपू
वार्धराशिस्थेक्रूरनरात् उग्रस्वभावमनुयात् चौरादितः मृतिः मरणंस्यात् १ अथताहशस्यभौमस्यवि
शेषस्थानगतस्ययोगावाहवियतीतिवर्षस्वामिनिभौमेनिर्बलेक्रूरहतेएताहशेपदिवियतिदश॥
स्थानगतेसनितदाअवनियामात्यात् राजप्रधानतः रिपुतः शत्रुतः तस्करतः चौरतः भयंवक्तव्यं अ
थाताहशेभौमेतूर्येचतुर्थेस्थानस्थेसतिमातुःपितृव्यात् स्वापितुः भ्रातुःमातुलात् मातृभ्रातुःपित

अग्निभीरग्निभेक्रूरनराद्द्विपदभेमृतिः १विपत्येवनियामात्यरिपुतस्करजंभयं
तुर्य्येमातुःपितृव्याद्वामातुलात्पितृतोगुरोः २लग्नेंथिहापतिसमापतयोमृतीश
चेदित्थशालिनूङमैनिधनप्रदाःस्युः चेत्याकरिष्टसमयेमृतिरेवतत्रसार्केकुजे
नृपभयंदिवसेव्ववेशे ३॥

तःपितुःसकाशात् गुरोःसकाशात् भयंवाच्यं २ अथमहामृत्युयोगानाह लग्नेंथिहापतिसमाप
तयोमृतीशाद्इतिवर्षलग्नस्वामीएतेत्रयः मृतीशाच्चेदित्थशालिनःअष्टमभावस्वामिनासहमुथ
शिलयोगश्चेत्तदानिधनप्रदाःस्युः चेत्याकरिष्टस्यदशारिष्टस्यसमयेमृतिरेवस्यात् अयमर्थःजन्म
कालिकपापग्रहदशायांपापग्रहस्यांतर्दशायांभवतितदामरणमेवस्यादित्यर्थः अन्यदाहतत्रेति
तत्रवर्षकालेदिवसेव्ववेशेदिवावर्षप्रवेशेसतिसार्केकुजेसूर्यसहतेभौमेसतिनृपभयंराज्ञःसकाशाद्

अथचतुर्थरोमत्युयोगानाह सूर्यइतिसूर्येजननेजन्मकालेसितेनशुक्रेणसहमूसरिफयोगेसतित
थावर्षेअधिकारीपंचाधिकारिणांमध्येअधिकारीभवतिकेंद्रसतिराजगदाद्भपंचराज्ञःसकाशा
त् तथारोगाद्भयंस्यात् अयमेकोयोगः अथद्वितीयःजन्मकालेअस्तस्थानेभौमाक्रांतराशौअधिकारि
णावर्षपंचाधिकारिणांमध्येअधिकारिणइंदुजेबुधेसतिरुक्रोगःस्यात् अथतृतीयः अथवासौम्ये
बुधेअधिकारिणिसतिक्रूरदृष्ट्याकुजस्यभौमेस्यक्रूरदृष्ट्याचतुर्थदशमेकादशसप्तमदृष्ट्यादृष्टेसतिअ
स्तक्रोधादिनारक्तविकारजनितिदोषादिनारुकरोगः स्यात् अथचतुर्थोयोगः पुनिरपिताहशे
बुधेअधिकारिणिक्रूरदृष्ट्याभौमेनदृष्टेअस्तस्थितेअर्थात्कुजस्यांशस्थितेकुजराशिमस्थितेदग्धेसति
कुजेनयुद्धादिनापीडितेइत्यर्थः तदाविदेशतः परदेशेवंधनमृतीस्यातामितिबुधाःप्राहुः उक्तंचसमर
सिंहेदग्धेचरश्मधस्तात्परदेशेवंलनमरणमितिताजिकालंकारेसौम्येक्रूरदृशाहतिः कुजदृशादग्धंचत
द्रश्मिभिर्निबंधेहननविदेशमरणंमृत्युलभेन्निश्चितमितिकेचित्तुइनाशस्थितेसूर्यसान्निध्येनास्तंगते
सूर्यमंडलगतेइत्यर्थः दग्धेपापाक्रांतेकुजपदसान्निध्येनकुजयुक्तेत्यर्थअतएववामनः भौमयुक्तेबु
धेसार्केविदेशेवधनंमृतितन्नभिन्नराशिस्थितेस्यापिबुधस्यास्तंगतत्वेनसार्कत्वाभावात्समरसिंहेवाक्ये
सूर्यपदसान्निध्याभावेनसूर्यस्याप्रशक्त्यासूर्यरश्मधस्यादित्यर्थकल्पनस्यान्याध्यत्वाच्चनचवाम ॥

नवाक्यस्य कागतिरिति वाच्यं भौमेयुक्ते बुधे त्वस्य स्वोक्तार्थविरुद्धार्थत्वाभावेन सार्केत्यस्या
धिकाक्न्यावि विरोधो भावादिति ४ अथ रोगयोगावाह भौमस्थाने इतिजन्मकाले भौमस्थाने भौ
मोयस्मिन् राशावस्तितस्मिन् राशौवर्षे अधिकारिणइंदौ चंद्रेसति शुन्नमप्रकाशयंन्नपभयंरा
ज्ञः सकाशाद्भयंरुकरोगाःस्युः अयमेको योगः अथान्यः मंदः शनैश्चरः अधिकारीपंचाधि

सूर्येमसरिफे सितेनजननेवर्षेधिकारीतथाकेंद्रे राजगदाद्भयं चरुमस्रक स्थानेधि
कारीकुजे सौम्येक्रूरदृशा कुजस्यरुगस्रकदोषादिनांशुस्थितेदग्धेवंधमतीविदशा
त् इतिप्राहुर्बुधे तादृशे ४ भौमस्थाने धिकारिन्दौ शुभ्नंन्नपभयंरुजः मंदेधिकारी खलो
दृहते पाडाकरस्मृतः ५ सार्के बुधे भौमेयुते मृतिः स्याद्देशांतरे वावधवंधनंच भौमेष्टमे
भयंवन्हे प्रहारोवान्नपाद्भयं ६॥ कारिणांमध्ये अधिकारी भूत्वा खेरष्टमस्थानेचेत्स्यात्तदा लो
हहतेः लोहप्रहारण पीडाकरः स्मृतः ५ अथाल्पमृत्युयोगावाह भौम इतिवर्षलग्नादष्टमस्थाने भौ
मेसतिवन्हेः सकाशात् भयंप्रहारोवाशस्त्रादिनाघातोवान्नपात् राज्ञः सकाशात् भयंवास्यात् अयमे
कोयोगः अथान्यः आरे भौमे खस्थे दशमस्थाने सतिचतुष्पाद्भ्यःचतुष्पदेभः पातः पतनंदुःखंअस्र
जः रक्तविकारजनितरुजः रोगाःस्युः ६॥

अथ धननाशविवाहयोगावाह वित्ताष्टगेति यस्मिन्ब्दे शः वर्षेशः इज्योगुरुः वित्ताष्टगः द्वितीये अष्ट
मस्थाने वासन् अशुभेन्वितः पापग्रहदृष्टस्तदाधननाशकर्तास्यात् अयमेकोयोगः अथान्यः मन्दे
शनौ घूने सप्तमस्थानेसतिदुर्वचनापवादकलालिर्मर्त्सनांधिक्कारंप्राप्नोति ७ अथमहाल्पमृत्युयो
गावाहपतितनइतिपतितेत्रेवुधेक्रूरदृशाचतुर्थदशमेकसप्तमदृष्ट्या आरे भौमेत्यसालेमुथशिलयोगं
करोतितदामृतिंवदेत अयमेकोयोगः अथान्यः ताहशेवुधेकुजहद्दास्थिते भौमहद्दायांस्थितेनाशः

आरेरवस्येवतुष्याद्भः पातोदुःखंरुजोस्रजः वित्ताष्टगेज्योधनहायघब्देशो ऽशुभेन्वितः
मंदे घूनेदुर्वचनापवादकलिमर्त्सनं ७ पतितेत्रेक्रूरदृशारेत्यशालेमृतिंवदेत् कुजहद्दा
स्थितोनाशः सौम्यदृष्ट्याशुभंवदेत ८ लग्नाधिपेनष्टदग्धेयोषिद्वादोशुभान्वितेजन्मन्य
ष्टमगोजीवोनाधिकारीकलिः पृथुः ९॥

द्रव्यस्यस्यादित्यपरीयोगः शुभदृष्ट्याताहशेवुधेयो
गद्वयेपिदृष्टश्चेत् शुभंवदेत ८ अथमुकटयोगावाहलग्नाधिपइतिलग्नाधिपेवर्षलग्नस्वामिनिनष्ट
दग्धेनष्टेहीनवलेदग्धे अस्तंगते अशुभान्विते अशुभेः पापग्रहे रन्वितेयुक्तेसति याषित् अन्यस्त्रीभोः
सहवादः कलहः स्यात् अयोमेकोयोगः अथान्यः जन्मनिजन्मकाले अष्टमगो अष्टमस्थानेनीरो
वृहस्पतिश्चेत्तिवर्षेनाधिकारीपंचाधिकारीपंचाधिकारिणांमध्ये अधिकारीनस्यात् तदापृथुर्महा
न्कलिः कलहः स्यात् ॥ ६॥

ता॰
टी॰
७६
८५

अथजपवास्योगावाहजप इति प्रागुक्तताद्दशेगुरौसुक्रेक्षणात् शुक्रेणदृष्टेसतिस्त्रीविवादप्रत्युत्तरवशेनजय:उक्त:कथित:अयमेकोयोग:अथान्य:भौमेंत्यगेभौमेअत्यगेभौमेअत्यगेवर्षलग्नाद्द्वादशस्थानेसतिधनद्वितीयस्थानेसूर्येसतितस्वावादात्क्लेशंविनिर्दिशेत् १० अथान्योकलिरोगयोगावाहरिपुगइतिअब्दपेवर्षस्वामिनिकुजहतेभौमेनपीडितेसतिरिपुभी:शत्रुभि:नोत्रे:स्वंवप्रास्थै:सहकलि:स्यात्सखेमंग्रामेभीतिर्भयंचस्यात् अयमेकोयोग:अथान्यसन्मागयोगजन्मकालीनलग्नस्वामीवर्षेदग्धेअसंग

जय:शुक्रेक्षणादुक्त:प्रत्युत्तरवशेनतुभौमेंत्यगेधनेसूर्येवादात्क्लेशंविनिर्दिशेत्
१० रिपुगोत्रकलिभीर्तिः संखोकुजेहतव्ययेदग्धेजन्मेगयोवर्षेष्टमोरोगकलि
दिशेत् ११ स्त्रजपव्दयोरधिकृतोभौमस्थानेगुरुर्हत: पापेवाद:स्फुयेप्येवंताद्दशी
न्दोशानि:पदे१२॥

त:सन्नष्ट:मोत्रअष्टमस्थानेचंद्रेवतितदारोगकलीदिशेत् कथयेत् ११ अथकलहयोगावाहस्त्र्यव्दपोरितिगुरुर्वृहस्पति: स्त्र्यव्दपोजन्मकालवर्षकालयोरधिकृत् तोअधिकारीभूत्वाभौमस्थानेजन्मकालिकभोगाक्रांतराशिस्थ:सन्हत:पापेपापग्रहेहेर्हतश्चेत्तुभवतितदालोक: सहस्फोयेवाद:स्यात् अयमेकोयोग: अथान्य: शतिपदेजन्मकालिकशन्याक्रांतराशौताद्दष्टितन्मंकालवर्षकालयोरधिकारिणापापग्रहेश्चेनेंदौचंद्रेतिष्टतिसतिएवमेवफल:स्फुट: कलह:स्यात् १२

ता॰ अथविदेशागमनादियोगमाहसृत्यब्दयोरितिसृत्यब्दयोर्जन्मकालवर्षकालयोःअधिकृतेआधिकारं
टी॰ प्राप्तेचंद्रेबुधपरेजन्मकालीनबुधाक्रांतराशौस्थितेहतेक्रूरैःपापग्रहैर्हतेसतिविदेशागमनादिकंफ
७७ लंस्यात् १३ अथाल्पमृत्युयोगावाहमेषइतिआरेभौमेमेषेसिंहेधनुषिवर्षेरंध्रेअष्टमस्थानेसतिअ
८८ सितःखजाङ्गंस्यात् अयमेकोयोगः अथान्यःमृतौअष्टमस्थानेमृतीशालग्नेशौअष्टमस्थानस्वा
मिवर्षलग्नस्वामिनौपापदृग्युतौपापैर्ग्रहैर्दृष्टौयुतौवासत्यांमृत्युदौतौमरणदौभवतः १४ अथस

सृत्यब्दयोरधिकृतेचंद्रेबुधपरेहतेक्रूरैर्विदेशागमनंवाऽऽरःस्याद्विमनस्कता १३
मेषेसिंहेधनुष्यारेःब्दयेरंध्रेऽसितोभयंमृतौमृतीशालग्नेशौमृत्युदौपापदृग्युतौ
१४ यत्राब्देजन्मनिकुजःसोब्दलग्नोपगोयदाबुधोवर्षपतिर्नष्टबलस्तत्रनशोभ
नं १५ सार्केशनौभौमयुतेखाष्टस्थेवाहनाद्भयंसार्केभौमेष्टमस्थेतुपतनंवाहनाद्भवेत् १६

मान्यवर्षेयोगमाहयत्राब्देइतिजन्मनिजन्मकालेकुजःभौमःयत्राब्देयस्मिन्राशौस्थात्सराशिर्यदाअ
ब्दलग्नोपगःवर्षलग्नेभवेत्तत्रबुधोऽब्दपतिर्वर्षपतिःवर्षस्वामीसन्नष्टबलोभवेत् तत्रशोभनंशुभफ
लदोनस्यात् १५ अथवाहनाद्भयपतनयोगावाहसार्केइतिसार्केशनौसूर्ययुक्तशनौभौमयुतेसभौमेखा
खाष्टस्थेदशमाष्टमस्थानस्थेसतिवाहनाद्भयंभवतिअयमेकोयोगः अथान्यः सार्केभौऽऽऽऽऽऽ ७७

ता॰ टी॰ ७८ ८०

मे सूर्ये युक्ते भौमे ऽष्टमस्थानस्थे सति वाहनात्पतनं वदेत् कथयेत् १६ ॥ अथ महामृत्युयोगावाह सारे व्यये इति सारेव्यये आरेण भौमेन सह वर्तमाने सारेण ताहष्टे ऽव्यये वर्षस्वामिनि सति मृतिः मरणं स्यात् तथाश्रुत्यारिमृतौ द्वादशाष्टाष्टमस्थानेषु चंद्रे सति मृति मरणं अयमेको योगः अथान्यः मृतिसद्येवे मृत्यु सहम स्वामिनि उदिते उदयं प्राप्ते निर्बले बलरहिते सति जीवते मृतिः स्यात् ॥ १७ ॥ अथान्यौ महामृत्युयोगावाह पुण्य सद्येश्वर इति पुण्य सद्येश्वरः पुण्य सहम स्वामी पुण्यसहमस्था

रव्यरे व्ययेऽष्टमे मृत्युं चंद्रे त्यारिमृतौ मृतिः उदिते मृति सद्मेशो निर्बले। जीविते मृतिः १७ पुण्य सद्मेश्वरः पुण्यसहमाद्वगोयदा मृत्यष्टमेशः पुण्यस्थो मृतिदः पापदृग्युतः १८ मृत्यष्टमगो राशिः पुण्यसद्मनिनाथयुक् अब्द लग्नोष्टमर्क्षे वाब्दस्थ्यं स्यान्मृतिस्तदा ॥ १९ ॥

नाद्दष्टमस्थानस्थः पापदृग्युतः पापग्रहै दृष्टः युक्तो वा स्यात्तदा मृतिः स्यात् अयमेको योगः अथान्यः मृत्यष्टमेशः मृतौ जन्मकाले अष्टमेशः अष्टमस्थानस्वामी पुण्यस्थः पुन्यसहमस्थानस्थः पापग्रहेण दृष्टो युतो वा स्यात् तदा मृतिः मरणं स्यात् १८ अथान्यौ मृत्युयोगावाह मृत्यष्टमगत इति मृत्यमगतो राशिः मृतौ जन्मकालिक लग्नादष्टमराशि वर्षकालीन पुण्यसद्मानि पुन्यसहमस्थानस्थो भवन्नाथयुक्तः स्वस्वामिना युक्तश्चेत्तदा मृत्युः स्यात् अयमेको योगः अथान्यः तथाश्चव

ता· टी· ७९ ८१

लग्नाद्वर्षेलग्नादष्टमर्क्षे अष्टमोराशिरित्यम् पुण्यसहमस्यः स्वामिनायुक्तश्चेत्तदामृत्युः स्यात् १९
अथान्यमृत्युयोगावाह पुण्यसद्मेतिपुण्यसद्मं पुण्यसहमं अशुभाक्रांतं पापग्रहैर्युक्तंस्याद्यदिमृ-
तीशः अष्टमस्थानस्वामीवातत्रतथैवपापाक्रांतः द्वादशषष्टाष्टमस्थानश्चेत्तदामदतितदाभवति द
तामृत्युंवदेत् अयमेकोयोगः अथान्यः मुथहेशः मुथहास्वामी अब्दपोवा वर्षस्वामीवातत्रतथैवपापा-
क्रांतः द्वादशषष्टाष्टमस्थानश्चेत्तदामृत्युंविनादिशेत् कथयेत् २० अथमहामृत्युयोगानाहसक्रूरेइति

पुण्यसद्माशुभाक्रांतंमृतीशोन्त्यारिरंध्रगः मुथहेशोब्दपोवापिमृत्युंतत्रविनिर्दिशेत्
२० सक्रूरेजन्मेयेमृत्योमृतिश्चेदिंथिहार्कियुक्भौमेक्षुतेक्षणेतत्रमृत्युः स्यादात्मघा
त्ततः २१ मंदोष्टमेमृतीशेत्थशालान्मृत्युकरःस्मृतः ॥

जन्मेजन्मये जन्मलग्नस्वामि
निसक्रूरेवर्षेपापग्रहयुक्तेमृत्यो अष्टमस्थानस्थेसतिमृतिः मरणंस्यात् चेदिंथिहामुथहायत्रकुत्रापि
स्थितः अर्कियुक्ताशनियुक्ताभौमक्षुतेक्षणात् भौमेनक्षुतदृष्ट्याचतुर्थदशमैकसप्तमदृष्ट्यादृष्टास
ति तत्रईदृशे योगे आत्मघाततः मृत्युः स्यात् २१ अथमहामृत्युयोगंसर्वमृत्युयोगपरिहारंचाह मं
दइति मंदः शनैश्चरः अष्टमे वर्षलग्नादष्टमस्थानेस्थितः मृतीशेत्थशालात् मृतीश अष्टमभा-
वस्वामीतेनसह मुथशिलयोगात् मृत्युकरः स्मृतः ॥

कथितः अथैतद्योगानामपवादमाह सर्वेपि मृत्युयोगाः शुभेत्थशाते लौ यथ रिष्टकारकाणां शुभग्रहे सांकं
मुथशिलयोगः तर्हि शुभभदायकाः अनिष्टदायकान भंति २२ अथ महामृत्युयोगमाह सूतिरंध्रपतिरिति
सूतौ जन्मकाले रंध्रपतिः अष्टमभावस्वामी मंदः शनिः अब्दे वर्षलग्नादष्टमस्थानस्थः सन् लग्नपेन
वर्षलग्नस्वामिना चेत् क्रूरदृष्ट्या चतुर्थदशमैकसप्तमदृष्ट्या इत्थशाली मुथशिलयोगं करोति तदा तत्

शुभेत्थशालात्सर्वेपि योगा नाशुभदायकाः २२ सूतिरंध्रपतिर्मंदोऽष्टमोब्दे लग्नपेन
चेत् इत्थशाली क्रूरदृशा तत्कालं मृत्युदायकः २३ पुण्यसद्मनि विधुस्तनौ तथास्तेख
लो मृतिरथार्थरिष्फगो मृत्युदो खलखगाच्च योजनुर्वर्षवेशतनुपो मृतो मृतिः २४ इत्य
ष्टमभावः अथ भाग्यभावविचारः भौमेब्दपे त्रिनवगे क्रूरायुक्ते बलान्विते शुभान्च

हत्तदा मार्गश्चिरं कार्यं स्थिरं ततः १॥

काले तस्मिन् काले तस्मिन् समये मृत्युदायको भवति २३ इति अष्टमभावविचारः अथ नवमभाववि
चारः तत्र नवमभावे मार्गं धर्मविचारः तावद्गमनयोगमाह भौमे इति भौमे अब्दपे वर्षस्वामिनि त्रिनवगे त्रिती
यगे नवस्थाने चाक्रूरायुक्ते क्रूरैः पापग्रहैः अयुक्ते योगरहिते बलान्विते बलिष्ठे सति तदा मार्गः गमनं शु
णावहः लाभादिसुखकरः चरकार्यं त्वरया साध्यमपि कार्यं ततः तस्मात् स्थिरं विलंबसाध्यं भवति १

अथान्यदाह त्रिधर्मस्य इति सूर्य अब्दयः वर्षस्वामी भूत्वा कंबूलीकं कंबूलयोगवान् सन् त्रिधर्मस्थः तृतीयनवमस्था
नस्थस्तदा मार्गसौख्यदः सच्चेन्नाधिकृतः पंचाधिकारिणां मध्ये अधिकारी न भवेत्तदा अन्यप्रेषणेन यानं गमनं स्या
त् २ अथान्यत् गमनयोगान् सार्द्धश्लोकेनाह शुक्र इति क्रूरार्दिते इति शुक्राब्दये वर्षस्वामिनि त्रिनवगे तृतीय
नवमस्थाने सति मार्गे गमनं मार्गे सौख्यं स्यात् अथ ताद्दशे शुक्रे विलोमगे वक्रिणि अस्ते वा अस्तंगते वा सति
कुगतिः गमनं कार्यसिद्धिर्न स्यादित्यर्थः तथा बुधे ताद्दशे वर्षस्वामिनि सबले त्रिनवगे सौम्ये बुधे सति देवयात्रा

त्रिधर्मस्थो ब्दयोः सूर्यः कंबूलीमार्गसौख्यदः अन्यप्रेषणपानं स्यात्सचेन्नाधि
कृतो भवेत् २ शुक्रे ब्दये त्रिनवगे मार्गे सौख्यं विलोमगे अस्ते वा कुगतिः सौम्य
देवयात्रा तथा विधे ॥ ३ ॥ क्रूरार्दिते कुयानं स्यात् गुरावेवं विचिंतयेत इत्यशा
ले लग्नधर्मपत्योर्यात्रास्त्यचिंतिता ४ ॥

देवोद्दशेन यात्रा स्यात् इदं तीर्थयात्रादेवस्युपलक्षणं ३ ताद्दशे शुक्रे बुधे क्रूरार्दिते पापग्रहैः पीडिते युक्ते
वा सति कुयानं कुत्सितगमनं स्यात् एवममुना प्रकारेण वर्षस्वामिनि त्रिनवगे गुरौ सति देवयात्रां वि
चिंतयन् कथयेत् तस्मिन् गुरौ क्रूरार्दिते तु कुयानं स्यात् अथ चिंतितयात्रायोगमुत्तरार्द्धेनाह इत्यशाल
इति लग्नधर्मपत्योः वर्षलग्नस्वामिनि सहनवमभावस्वामिनः इत्यशाले मुथशिलयोगे सति

अ ॥–

चिंतिता अकस्मात् यत्रास्यात् ४ अथ वैपरीतं मुथशिलमन्यत्रातिदेशमाह लग्नेशो वर्षे लग्नस्वामी
धर्मपेन नवमभावस्वामिना मुथशिलयोगं करोति तदा चिंतितं गमनं एवममुना प्रकारेण लग्नाद्व
योर्योगे वर्षलग्नस्वामी अनयोर्योगे सति तथा मुथहा स्वामी अंगपो वर्षलग्नस्वामी अनयोर्योगे सति
मुथशिलं पूर्वोक्तं स्यात् ५ अथ अथ सद्यात्रायोग वाह गुरुस्थान इति गुरुस्थाने जन्मकाले गुरुर्वृहस्पति
र्यास्मिन राशावस्ति तस्मिन् राशौ वर्षकालीन कुजे धर्मे नवमस्थानगते सति सद्यात्रा समीचीनयात्रा
भृत्यसेवकः वित्तं भृत्यद्रव्यप्राप्तिकारिका स्यात् अयमेको योगः अथान्यः ज्ञस्थाने जन्मकाले बुधोय

लग्नेशो धर्म्मपेयषड्न्स्वंमहश्चिंतिताध्वदः एवं लग्नाद्व्योर्योगे मुथहांगपयोरपि ५ गुरुस्था
नेकुजे धर्म्मे सद्यात्राभृत्यवित्तदाज्ञस्थाने लग्नपो भौमो दृष्टः साद्यानसौख्यदः स्वस्थानगो
वा बलवान् लग्नदर्शी सुयानदः ॥ स्मिन् राशावस्ति तस्मिन् राशौ वर्षकालीने भौमे लग्नपालग्न
स्वामिन दृष्टः सन् सधानसौख्यदः स्यात् ६ अथान्यं सद्यात्रायोगं श्लोकार्द्धेनाह स्वस्थानग इति जन्मकाले
भौमः स्वस्थानगो मेषवृश्चिकगतो वर्षेपि मेषवृश्चिक राशिगतः सन् नवमे बलवान् स्यात् लग्नदर्शी
लग्नदर्शी पश्यति लग्नं तदा सुयानदः शुभगमनं भवेत् अथ शुभयात्रायोगान् सार्द्ध श्लोकेनाह जन्माधिका
रीति ज्ञो बुधः जन्मकाले अधिकारी भूत्वा मंदस्थाने जन्मकालीन प्रान्याक्रांतराशिगतः सन् वर्षे नवमस्थानग
तः क्रूरयुतः पापग्रहयुक्तो यदा भवेत् तदारियोः शत्रोर्भटकात् कलहप्रमार्गगमनं स्यात् गुरुर्धेति इंदुर्जीव

